| | रु। | आ० |
|---|---|---|
| १ [illegible] | | ९ |
| २ [illegible] | | ६ |
| ३ [illegible] | | ४ |
| ४ [illegible] | १ | ० |
| ५ ईशावास्योपनिषत्— सटीकशांकरभाष्योपेता। .... .... | ० | १४ |
| ६ केनोपनिषत्— सटीकशांकरभाष्योपेता। .... .... .... | १ | ० |
| ७ काठकोपनिषत्— टीकाद्वयसहितशांकरभाष्योपेता। .... | १ | ४ |
| ८ प्रश्नोपनिषत्— सटीकशांकरभाष्योपेता। .... .... | १ | ० |
| ९ मुण्डकोपनिषत्— सटीकशांकरभाष्योपेता। .... .... | ० | १० |
| १० माण्डूक्योपनिषत्— सटीकशांकरभाष्यगौडपादीयकारिकोपेता। | २ | ९ |
| ११ ऐतरेयोपनिषत्— सटीकशांकरभाष्योपेता। .... .... | १ | ४ |
| १२ तैत्तिरीयोपनिषत् — सटीकशांकरभाष्योपेता। .... .... | १ | १२ |
| १३ तैत्तिरीयोपनिषद्भाष्यवार्तिकम्— सुरेश्वराचार्यकृतं सटीकम्। | २ | ९ |
| १४ छान्दोग्योपनिषत्— सटीकशांकरभाष्योपेता। .... .... | ५ | ० |
| १५ बृहदारण्यकोपनिषत्— सटीकशांकरभाष्योपेता। .... .... | ८ | ० |
| १६ बृहदारण्यकोपनिषद्भाष्यवार्तिकम्— भागत्रयात्मकम्। .... | २२ | ८ |
| १७ श्वेताश्वतरोपनिषत्— भाष्यदीपिकाद्युपेता। .... .... | २ | ४ |
| १८ सौरपुराणम्— श्रीमद्वैपायनप्रणीतम्। उपपुराणम्। .... | ३ | ० |
| १९ रसरत्नसमुच्चयः— श्रीमद्वाग्भटाचार्यविरचितः। वैद्यकग्रन्थः। | ३ | १२ |
| २० जीवन्मुक्तिविवेकः— विद्यारण्यविरचितः सटीकः। .... | ३ | ११ |
| २१ ब्रह्मसूत्राणि— सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि। | १२ | ० |
| २२ श्रीमच्छंकरदिग्विजयः— विद्यारण्यकृतः। टीकाटिप्पण्या सहितः। | १ | ० |
| २३ वैयासिकन्यायमालाविस्तरः— भारतीतीर्थमुनिप्रणीतः। .... | १ | १२ |
| २४ जैमिनीयन्यायमालाविस्तरः— श्रीमाधवप्रणीतः। .... | ८ | ० |
| २५ सूतसंहिता— माधवकृतटीकोपेता। भागत्रयात्मिका। .... | ११ | ८ |
| २६ हस्त्यायुर्वेदः— पालकाप्यमुनिविरचितः। .... .... | ७ | ६ |
| २७ वृन्दमाधवः— श्रीवृन्दप्रणीतः। सटीकः। वैद्यकग्रन्थः। ... | १ | १२ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| २८ ब्रह्मपुराणम्—श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । .... | ६ | ४ |
| २९ उपनिषदां समुच्चयः—श्रीनारायणशंकरानन्दकृतदीपिकासहितः । | ६ | १२ |
| ३० नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्ययुता । .... ... | १ | १२ |
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ ऐतरेयब्राह्मणम्—सायणभाष्यसमेतम् । भागद्वयात्मकम् । .... | १० | १० |
| ३३ धन्वन्तरीयनिघण्टुः—श्रीधन्वन्तरिविरचितः, वैद्यग्रन्थः । .... | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता—शांकरभाष्योपेता । .... .... ... | २ | ० |
| ३५ श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । .... .... | ६ | ४ |
| ३५ सङ्गीतरत्नाकरः—शार्ङ्गदेवकृतः, सटीकः द्विभागः । गानशास्त्रम् । | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्—सायणभाष्यसमेतं भागद्वयात्मकम् । .... | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेतं भागत्रयात्मकम् । .... | १४ | ८ |
| ३८ ऐतरेयारण्यकम्—सायणभाष्यसहितम् । .... .... ... | १ | ० |
| ३९ संस्काररत्नमाला—गोपीनाथभट्टविरचिता । भागद्वयात्मिका । | १२ | ८ |
| ४० संन्यासपद्धतिसमुच्चयः—रुद्रदेवजश्रीकृष्णपण्डितविरचितः । | २ | ० |
| ४१ अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् .... .... | ९ | ४ |
| ४२ तैत्तिरीयसंहिता—सायणभाष्यसमेता । भागनवकात्मिका । .... | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः—मल्लीनाथीशोकृताः सटीकाः । | ० | १२ |
| ४४ श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । .... .... .... | १ | ८ |
| ४५ श्रीमद्भगवद्गीता—मधुसूदनसरस्वतीकृतटीकोपेता । .... .... | ९ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः—अपरार्ककृतटीकासहिता भागद्वयात्मिका । | १३ | ० |
| ४७ पातञ्जलयोगसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ३ | ० |
| ४८ स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । .... | ९ | ० |
| ४९ वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः । ... .... ... | २ | ० |
| ५२ श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता । .... .... | २ | ० |
| ५३ सत्याषाढश्रौतसूत्रम्—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः—आठवलेइत्युपाह्वविष्णुभट्टकृतः । .... | ४ | ६ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रु० | आ० |
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः । ... | २ | ८ |
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दुः—मटेइत्युपाह्वत्र्यम्बकविरचितः । ... .... | ४ | ० |
| ५९ श्राद्धमञ्जरी—बेळकरोपाह्वबापूभट्टविरचिता । ... .... | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । .... .... .... | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । .... .... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः—सटीकाः । | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । .... | १ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | १ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतशाङ्खशाखीयम् । .... | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । .... .... .... .... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... .... | २ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । .... ... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । .... .... .... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । .... | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । .... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता । ... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । .... ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता ।... ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । ... | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । .... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... .... .... | १ | १२ |
| ७९ छान्दोग्योपनिषत्—दिगम्बरानुचरव्याख्यासमेता । ... .... | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । ... ... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । .... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... .... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं मधुसूदनीयम् । ... .... | ६ | ६ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितः । .... .... | १ | ० |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७४

रुद्रस्कन्दप्रणीता

# द्राह्यायणगृह्यसूत्रवृत्तिः ।




आनन्दाश्रमस्थपण्डितैः वे० शा० सं० गोखले इत्युपाह्व-
गणेशशास्त्रिभिः संशोधिता ।

सा

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशिता ।

शालिवाहनशकाब्दाः १८३६

खिस्ताब्दाः १९१४



मूल्यमेको रूपकः ( रु० १ )

## आदर्शपुस्तकोल्लेखपत्रिका ।

---

अस्या रुद्रस्कन्दप्रणीतद्राह्यायणगृह्यसूत्रवृत्तेः पुस्तकं परहितैकपरतया यैर्दत्तं तेषां नाम प्रदर्श्यते—

रा० रा० दत्तात्रेय गणेश द्रवीड यवतमाळ हायस्कूलमास्तर इत्येतेषाम् । अस्य लेखनकालः संवत् १८४०

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

रुद्रस्कन्दप्रणीता

# द्राह्यायणगृह्यसूत्रवृत्तिः ।

तत्र प्रथमपटले प्रथमः खण्डः ।

## अथातो गृह्या कर्माणि ॥ १ ॥

अथानन्तरम् । कस्मादनन्तरम् । देवसवितरित्यादिमन्त्रवच्छाखाध्ययनात् । यतोऽनधीतवेदस्य मन्त्रापरिज्ञानाद्वक्ष्यमाणेषु वाक्येषु कर्मानुष्ठानयोग्यतया प्रतिपत्तुमशक्यमतस्तदनन्तरमिति गम्यते । ननु मन्त्रमात्राध्ययनादपि शक्यः प्रतिपत्तुम् । सत्यम् । यदि मन्त्रमात्रेऽध्ययनविधिः स्यात् । विधा[यक]विध्यभावे को दोषः । इच्छानिबन्धनमध्ययनं स्यात् । तथा सत्यध्ययनस्य पुरुषप्रतिपत्त्युपायत्वात् । तस्माच्च तत्साध्यपुरुषार्थपरामर्शापेक्षत्वात् । मन्त्राणां चातीन्द्रियपुरुषार्थसाधनकारोपकारिमकाशनं शक्तिसद्भावनिश्चयप्रमाणाभावेन तद्विवक्षासंभवादृष्टत्वमन्यविवक्षया भवितव्यम् । अन्यविवक्षया चोच्चारितस्याप्रामाण्यमाहुर्मीमांसकाः । ग्रन्थगौरवभियाऽस्माभिर्न लिख्यते । अप्रमाणभूतस्य च साधनत्वायोगान्न तावन्मात्रमध्ययनस्य वृत्तत्वम् । वेदे स्वध्ययने 'स्वाध्यायोऽध्येतव्यः' इत्यक्षरप्रधानत्वान्निर्देश्यस्य संस्क्रियमाणत्वा[द]क्षरद्वारेण च पुरुषार्थावबोधनरूपप्रयोजनसिद्धिसंभवात्प्रामाण्यम् । वेदस्वध्ययनस्य नियतक्रमत्वान्न तावन्मात्रस्य संभवति । एवंविधमिति (यमपि) तत्परस्य वृत्तत्वम् । एकत्वाद्विधरेन्तरतः स्थितो विधिविरोधात् । न हि प्रधानभूतामध्ययनक्रियां परिसमाप्य तदपेक्षितव्यापारान्तरे प्रवृत्तिः । अतःशब्दो वक्ष्यमाणं प्रति प्रवृत्तस्याध्ययनस्य पर्यवसानलक्षणं हेतुत्वमाह । अध्ययनविधिर्ह्यर्थावबोधपर्यन्तोऽनुष्ठानयोग्यमवबोधं विना न पर्यवस्यति । 'देव सवितः प्रसुव' इत्यादि मन्त्रोपपन्नस्य विनियोगो न गृह्यशास्त्रोपदेशं विनाऽनुष्ठानयोग्यो

भवति । अत एव सूत्रार्थः—अध्ययनानन्तरं तदपर्यवसानादेव हेतोर्गृह्याणि कर्माण्युपदेक्ष्याम इति । औपासनाख्योऽग्निर्गृह्यः । यस्मिन्नग्नौ पाणिं गृह्णीयात्स गृह्य इति वचनात्तत्साध्यानि कर्माणि लक्षणया गृह्याणीत्याह । अत औपासनहोमादिषु गृह्याग्निः । अत एवाधिकार इत्युक्तं भवति । आहृत्यविहितं वर्जयित्वा यथा पुनर्मामिति ब्रह्मचारिणश्चौलादीनि बालसंस्कारार्थतया तच्छेषत्वेन यद्यपि बोध्यन्ते तथाऽपि पुत्रं संस्कुर्यादित्येवमादिवचनात्पितुरपि तानि कृत्यान्येव स्वकृत्यानि च सर्वाण्यग्निसाध्यान्यस्मिन्नेवाग्नौ कार्याणि । अस्य सर्वसाधारणत्वेनोत्पन्नत्वादग्न्यन्तराक्षेपे प्रमाणान्तराभावाच्च । बालकृत्यमपि प्रसङ्गसिद्धत्वान्नाग्न्यन्तरमाक्षिपति । यदा तु सर्वाधानेन पितुरग्न्यभावस्तदा बालकृत्येनाऽऽक्षिप्यते लौकिकाग्निः । सर्वहोमेषु समाचारतः सिद्धत्वाल्लौकिकस्य । पिताऽपि तस्मिन्नेवाग्नौ संस्कुर्यात् । विद्यमाने हि गृह्य उपात्तस्य विद्यमानत्वादुपादानक्षमः । अत्र परसंस्कारार्थान्येकदेशे प्रणीय तस्मिन्नेव कार्याणि । समाप्तेषु तस्य लौकिकत्वमित्युपलब्धे देशे समाचारः । यद्येवमेव समाचारः सार्वत्रिकः स्यात्तथैव श्रुतिकल्पनया प्रमाणं स्यात् । अथ तु देशान्तरे विमानं स्यात्कृत्स्न एव परार्थान्यपि स्युः । नाप्यग्नेरन्ते लौकिकत्वम् । यदाऽनग्निः पिता भार्यामरणादिना यदि शास्त्रान्तरेष्वनग्नेः संस्कारप्रतिषेधो विद्यते तदाऽन्येन कारयेत् । अयं तु न विद्यते स्वयमेव लौकिकेऽग्नौ कुर्यात् । नन्वन्यदीयेऽग्न्यन्यः किमिति न करोति । आहवनीयादिवत्पुरुषविशेषं प्रति नियतत्वाद्यस्य यो गृह्यस्तस्यैव संस्कारयोग्यः । य[अ]त्र गृह्याणीति प्राप्ते छान्दसो लुक्कृतश्छन्दस्तुल्यत्वमस्य शास्त्रस्य गमयितुम् । तुल्यत्वं च वेदमूलत्वेन । मन्वादिवदतीन्द्रियार्थे प्रामाण्याद्वेदमूलत्वाच्च । वेदमूलेषु स्मृतिशास्त्रेषु वेदाङ्गेषु च यद्यदस्य शास्त्रस्यापेक्षितं विद्यते तस्य तस्य संग्रहः सिद्धो भवति । सर्वेषामध्ययनविध्याक्षिप्ततयैकविज्ञानविषयत्वादपेक्षाभावे त्वविरोधिनां[नं] विना समुच्चयः । परामर्शहेत्वभावेन वाक्यार्थस्य पर्यवसानादगृह्याणीति सिद्धे कर्माणीतिवचनमग्न्यन्तरसाध्यस्यान्वष्टक्यादेरनग्निसाध्यस्य च संग्रहार्थम् । तस्य च प्रयोजनं वक्ष्यमाणायां परिभाषायां साधारणत्वं सूचयितुम् । अत एव वाक्यार्थः—गृह्याण्यगृह्याणि च कर्माण्युपदेक्ष्याम इति । गृह्यसाहचर्यादगृह्याण्यप्यौपासनवत एवेति केचित् ॥ १ ॥

उदगयनपूर्वपक्षपुण्याहेषु प्रागावर्त-
नादह्नः कालोऽनादेश इति ॥ २॥

यस्मिन्क्षणे मकरं गच्छति सूर्यस्ततः प्रभृति षण्मासा उदगयनम् । यस्मिन्क्षणे सूर्याचन्द्रमसौ सह वसतस्तत ऊर्ध्वं यस्मिन्क्षणे तयोरेव परमो विप्रकर्षस्ततः प्राक्पूर्वपक्षः । ज्योतिःशास्त्रे कर्मयोग्यं यदहरुक्तं तत्पुण्यमहः । तेषां द्वन्द्वसमासः । अन्वये तेषामितरेतरयोगमाह विभक्तिः । अतो येषु कर्मसु समुच्चितानामन्वयः संभवति तेषु समुच्चितानामेवाङ्गत्वम् । येषु सर्वसंभवस्तेषु यथासंभवं द्वयोरेकस्मिन्वाऽन्वयः । ननु सकृदुच्चारितस्य कथमनेकधाऽन्वयः । सर्वकर्मणामविकृतत्वादर्थादावर्तते एवम् । इतरेतरयोगाविवक्षया च समुच्चयासंभवेऽपि यज्ज्योतिःशास्त्रे निषिद्धमहस्तद्वर्जनीयम् । उदगयनपूर्वपक्षावनादृत्य दोषहेतुत्वान्मध्यंदिनादूर्ध्वमहरावर्तनादित्याहुः । ततः प्राग्गृहाणां चक्राभावेऽप्यावृत्तिरस्ति । अह्न इति विशिनष्टि । ननु प्रातराहुतिं हुत्वा हविर्निर्वपेदित्यनेनैव सिद्धम् । न सिध्यति पूर्वकालनिषेधपरत्वात्तस्य । अपि च सर्वमहः प्रातराहुतेः स्थानमिति वचनादपराह्णेऽपि स्यात् । काल इति । यथाऽन्ये दर्शादयः काला अधिकारहेतवस्तथाऽयमप्युक्तः कालोऽधिकारहेतुर्नाङ्गमात्रमिति गमयितुम् । अतोऽन्यकाले कृतमकृतमेव न विगुणमात्रम् । विशेषादेवास्य बलीयस्त्वे सिद्धेऽनादेश इति शास्त्रान्तरादेशः संग्रहणार्थः । तत्र विरुद्धानां विकल्पो यथा विवाहे सर्वकालत्वमुपनयने च पञ्चमवर्षादि । अविरुद्धानां समुच्चयो यथोपनयने वसन्तादिसर्वेषु च मुहूर्तादि । एवं सर्वत्र ॥ २ ॥

अथ सर्गे यथोत्साहं ब्राह्मणानाशयेदिति ॥ ३ ॥

अधिकारप्रयोगे समाप्ते यथाश्रद्धं त्र्यवरान्ब्राह्मणान्भोजयेत् ।

यज्ञोपवीतमिति ॥ ४ ॥

कर्माङ्गं स्यादिति शेषः । नित्ये विद्यमाने न यज्ञोपवीतान्तरं प्रसङ्गात्सिद्धेः ॥ ४ ॥

सौत्रमिति ॥ ५ ॥

तद्यज्ञोपवीतं कार्पाससूत्रकृतं रज्जुर्वासो वा स्मृत्यन्तराच्छ्रेयस्कभक्तिः ॥ ५ ॥

कौशं वेति॥ ६ ॥

कुशविकृतं वा कुशविकारः ॥ ६ ॥

ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमु-
द्धृत्य यज्ञोपवीती भवतीति ॥ ७ ॥

सौत्रं कौशं वा पाशाकृतिं कृत्वा ग्रीवायामासज्य दक्षिणं बाहुमुद्धृत्य तस्याधस्तादवलम्बनं कृत्वा यज्ञोपवीती भवति । विन्यासविशेषयुक्तेऽस्मिन्द्रव्ये यज्ञोपवीतशब्दो वर्तते तदर्थे द्रव्य उपचारात् ॥ ७ ॥

सव्यं प्राचीनावीतीति ॥ ८ ॥

ग्रीवायां प्रतिमुच्य सव्यं बाहुमुद्धृत्य प्राचीनावीती भवति । एतत्पित्र्ये । स्मृत्यन्तरात् ' उपासने गुरूणां वृद्धानामतिथीनां च होमे जप्यकर्मणि भोजन आचमने स्वाध्याये यज्ञोपवीती स्यादन्येष्वप्येवं-प्रकारेषु भवतीति । व्याप्त्यर्थं गृह्यशास्त्रे विहितादन्यत्राप्येतद्द्वयमङ्गमिति निवीतिता नोक्ताऽस्मिञ्शास्त्रे निवीतिना कृत्यं नास्तीति । केचित्त्वायसान्वधकाम इत्यत्र निवीतित्वमिच्छन्ति वधकामे श्येनयागे दर्शनात् । तदर्थं च ग्रीवायां प्रतिमुच्येति सूत्रमवि[व]च्छिद्य निवीती भवतीत्यध्याहरन्ति ॥ ८ ॥

सर्वकर्मणामङ्गमाचमनमादौ कर्तव्यं तदर्थं तदाह—

त्रिराचम्यापो द्विः परिमृजीतेति ॥ ९ ॥

उदकं त्रिरङ्गुष्ठमूलतलेन पीत्वाऽङ्गुष्ठमूलतलेनालोमप्रदेशाद्द्विः परित ओष्ठौ मृजीताद्भिः ॥ ९ ॥

पादावभ्युक्ष्य शिरोऽभ्युक्षेदिति ॥ १० ॥

पादौ युगपदभिमुखं प्रोक्षेदद्भिः । पृथक्सूत्रकरणं पूर्वोत्तरसूत्राभ्यां वैलक्षण्यं गमयितुम् । वैलक्षण्यं च पादाद्यवयवविशेषानपेक्षत्वम् ॥ १०

इन्द्रियाण्यद्भिः संस्पृशेदिति ॥ ११ ॥

अङ्गुष्ठानामिकाभ्यां चक्षुषी अङ्गुष्ठप्रदेशिनीभ्यां नासिके अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे । अप इत्यधिकारात्सिद्धेरद्भिरिति प्रत्यङ्गमपग्रहणार्थम् । इन्द्रियाणीति सामान्योक्तावपि पादयोः प्राक्पृथग्ग्रहणात्पाय्वा-

वीनामग्रहणमयोग्यत्वात् । मनसश्चाशक्यत्वात् । त्वचः सर्वगतत्वाद(द)सिद्धे जिह्वायां चापाने पारिशेष्यात्प्राणानामेव ॥ ११ ॥

अन्ततः प्रत्युपस्पृश्य शुचिर्भवतीति ॥ १२ ॥

प्रत्युपस्पृश्येत्युक्ते पूर्वोक्तानां प्रत्येकं स्यादित्यन्तत इत्युक्तम् । उपस्पृश्येति सिद्धे प्रतीतिपूर्वमप्युपस्पर्शनमस्तीति सूचयितुम् । पूर्वमप्युपस्पर्शितमपेक्ष्य प्रत्युपस्पर्शनं भवति । तच्च स्मृत्यन्तरादवगम्यते—आ मणिबन्धनात्पाणी प्रक्षाल्येति । तत्परामर्शे च तत्सहचरितानां प्राङ्मुख उदङ्मुखो वा शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीती वाग्यतो हृदयस्पृशोऽनुष्णाभिरफेनाभिरद्भिस्तीर्थेन पादौ प्रक्षाल्येत्येवमादीनामपि परामर्शः सिद्धो भवतीति तैः समुच्चयः । पादप्रभृतिक्रियाविशेषणाञ्जिरपेक्षभवणान्मुखमार्जनादीनां न निवृत्तिः । शुचिरिति न केवलं कर्माङ्गभाव एव, आचमनाहार्य प्रायश्चित्ते सति शुद्ध्यर्थमपि भवतीत्येवमर्थो भवतीति यज्ञोपवीती भवतीतिवत् ॥ १२ ॥

आसनस्थानसंवेशनान्युदगग्रेषु दर्भेष्विति ॥ १३ ॥

कुर्यादिति शेषः । विध्युपदिष्टानि नार्थप्राप्तान्यासनादीनि वचनस्यान्यथा वैयर्थ्यात् ॥ १३ ॥

प्राङ्मुखस्य प्रतीयादिति ॥ १४ ॥

प्राङ्मुख इत्युक्ते कुर्यादित्यध्याहारकर्तुरेव प्राङ्मुखत्वं स्यादिति सर्वस्यैव कर्मसंबन्धिनः प्राङ्मुखत्वं विधातुं संबन्धमात्रवाचिनीं षष्ठीमाह । यथा चौले मातुः । वाक्यविशेषात्सिद्धे प्रतीयादिति मधुपर्के वातुश्चौले नापितस्य प्रत्यङ्मुखनियमार्थम् । प्राङ्मुखस्य प्रत्यङ्मुखक्रियार्थेऽभिमुखमीयाद्गच्छेदितर इत्यर्थः ॥ १४ ॥

पश्चादग्नेर्यत्र होमः स्यादिति ॥ १५ ॥

यस्मिन्प्रदेशे होमो विद्यते तत्र प्रधानमङ्गानि च पश्चादग्नेरुपविश्य कुर्यात् । स्यादिति व्याप्त्यर्थं भवतिवत् ॥ १ ॥

सहशिरसं स्नानशब्द इति ॥ १६ ॥

प्रतीयादिति शेषः । 'स्नाता महतेनाऽऽच्छाद्य' 'स्नाप्य कुमारम्' इत्यादौ स्नान इत्येव सिद्धे शब्द इति गृह्यात्मानमभिषिञ्चेदित्यत्र शिरस्यभिषे-

कार्थम् । इतरथा सेकमात्रमिदं स्नानमिति न शिरसि स्यात् । स्नाते स्नानं तुल्यवाचिनि च शब्द इति सूत्रार्थः ॥ १६ ॥

दक्षिणेन पाणिना कृत्यमनादेशे ॥ १७ ॥

कुर्यादित्यधिकारात्सिद्धे कृत्यमिति गृह्योक्तादन्यदपि यत्कृत्यं तदपि दक्षिणेनैव हस्तेन कुर्यादित्येवमर्थम् । आदेशबलीयस्त्वात्सिद्धेऽनादेशे इति पदार्थस्वभावादेशाविनिवृत्त्यर्थं यथा परिदध्यादित्यादौ द्वयोः पाण्योः ॥ १७ ॥

मन्त्रान्तमव्यक्तं परस्याऽऽदिग्रहणेन विद्यात् ॥ १८ ॥

मन्त्रान्तमव्यक्तं च विनियोगतः परिमाणतश्च परस्येत्याकाङ्क्षावशाद्वावर्याद्युत्तरस्य मन्त्रस्येत्येकः प्रधानस्य मन्त्रबोधस्यार्थस्येति द्वितीयः। आदिश्च ग्रहणं चाऽऽदिग्रहणम् । यथासंख्येनान्वयः । एष सूत्रार्थः । मन्त्रान्तमुत्तरस्याऽऽदिना विद्यात् । अव्यक्तं विनियोगतः परिमाणतश्चार्थवशेन विनियुक्तं परिमाणयुक्तं च विद्यादिति अविनियुक्तो हि मन्त्रोऽध्ययनसंस्कृतः कार्यविशेषसंबन्धाकाङ्क्षः कर्मविशेषार्थानां मन्त्राणां संनिधावाम्नायमानस्तद्धर्मविशेषभावं प्रतिपद्यते संनिधिविशेषादपर्यवसानाच्च तस्मिन्नपि कर्मणि यत्पदार्थप्रकाशनसमर्थो यः स तस्यैव शेषः सामर्थ्याविशेषात् । यस्यतत्प्रकाशकः स तत्क्रमेणैव जपतयाऽऽशीर्वादतया चोपयुज्यते । आकाङ्क्षाविशाच्चेयत्तामात्रपरिच्छेदो मन्त्रस्य ननु परस्य ग्रहणेनेत्यनेनैव परिमाणस्याप्युक्तत्वादन्तमादिनेत्यनेन किमुच्यते द्वयोर्मन्त्रयोर्मध्यगतस्य यस्य पदस्याऽऽभिधानिकोऽन्वयो न केनचिदपि गम्यते तस्यावश्यमेकेनान्वयः कल्प्यः अन्यथा तस्याऽऽनर्थक्यात् । यस्य * द्वाभ्यामपि केनापि प्रकारेणान्वयो दृश्यते तस्याप्येकेनैवान्वय आकाङ्क्षापूर्तेरेकत्वाच्चावगम्यते । एतदुक्तं भवति उत्तरमन्त्रादेः प्राक्पूर्वत एव मन्त्रो नान्वयी किंचित्पदमित्येकोऽर्थः। उत्तरमन्त्रादेः प्रागेव पूर्वमन्त्रो नोत्तरादिसहित इति द्वितीयः। मध्यमं पद किं पूर्वेणाभिसंबध्यत उतोत्तरेणेति संदेहे कल्पनालाघवाद्विशेष्याध्यवसायः। अस्यार्थस्य न्यायसिद्धे न दोषो नैयायिकत्वात् । सूत्रस्य वाक्यशेषासिद्धे न स्वरुच्या कल्पयेत् । न्यायसिद्धमेव जानीयादित्येवमर्थः ॥ १८ ॥

---

* वाक्याऽपीति पाठान्तरम् ।

स्वाहान्ता मन्त्रा होमेषु ॥ १९ ॥

ये पाठे न स्वाहान्तास्तेऽपि स्वाहान्ताः कार्याः स्वाहा सोमाय पितृमते स्वाहाऽग्नये कव्यवाहनायेत्यत्र न स्वाहान्तताऽऽद्येनैव कृतार्थत्वात् । पुरस्तात्स्वाहाकृतयोऽन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये देवा इति श्रुतेः । अधिकारात्सिद्धे मन्त्रान्त इत्यतिव्याप्त्यर्थः ॥ १९ ॥

पाकयज्ञ इत्याख्या यः कश्चैकाग्नौ ॥ २० ॥

संज्ञा व्यवहारार्था । एकाग्निर्गृह्योऽग्निः । एकाग्निग्रहणमन्याग्निसाध्यानां संज्ञानिवृत्त्यर्थम् । यः कश्चेति सप्त पाकयज्ञसंस्था इति दर्शनात्तद्व्यतिरेकार्थं शास्त्रान्तरोक्तसंग्रहणार्थं च ॥ २० ॥

तत्रर्त्विग्ब्रह्मा सायंप्रातर्होमवर्जम् ॥ २१ ॥

तत्र तस्मिन्नेव पाकयज्ञे नान्यत्र । अतो मथिते लौकिके वा न ब्रह्मर्त्विगित्यार्षेयोऽनूचान इत्याद्यृत्विग्गुणनियमार्थम् ॥ २० ॥

स्वयं हौत्रम् ॥ २१ ॥

सायं प्रातर्होमवर्जमित्यनुवर्तते । इतरथा सूत्रानर्थक्यात् । तथाऽपि सर्वहोमेषु स्वामिनो होमकर्तृत्वं न सिद्ध्यविधेयं नित्यप्राप्तत्वात् । सायंप्रातर्होमे स्वामिनोऽन्यस्याकर्तृत्वाभ्यनुज्ञानार्थं सूत्रम् । तदधिकारार्थमेव हि ब्रह्मासनमनुक्त्वैवमुक्तम् ॥ २१ ॥

दक्षिणोतेऽग्नेरुदङ्मुखस्तूष्णीमास्ते ब्रह्माहोमात्प्रागग्रेषु ॥ २२ ॥

अग्नेर्दक्षिणतो न होतुः । तूष्णीं वाग्यतः । आहोमात्प्रयोगसमाप्तेः । प्रागग्रेषु स्पष्टम् ॥ २२ ॥

कामं त्वपि यज्ञियं व्याहरेत् ॥ २३ ॥

यज्ञोपकार्यं तदितो ब्रह्मा ब्रूयात् । अत एव कर्मविदेव ब्रह्मा । कामं त्विति लौकिकस्यापि कर्मोपकारिणो व्याहरणार्थम् ॥ २३ ॥

अयज्ञियां वा व्याहृत्य महाव्याहृतीर्जपेत् ॥ २४ ॥

वाशब्दाद्यज्ञियामप्यन्यथासिद्धां जपेन्मनसा व्याहृतय एव महाव्याहृतयः ॥ २४ ॥

इदं विष्णुरिति वा ऋचम् ॥ २५ ॥

हौत्रब्रह्मत्वे स्वयं कुर्वन्ब्रह्मासनमुपविश्य च्छत्रमुत्तरासङ्गं कमण्डलुं वा तत्र कृत्वाऽथान्यत्कुर्यात् ॥ २६ ॥

आपत्कल्पोऽयम् । उत्तरासङ्गमुत्तरीयं वासः । अथान्यदिति । ब्रह्मोपवेशनात्पूर्वनिवृत्तं यत्कर्म तदनन्तरविहितं यत्कर्मावशिष्टं तदित्यर्थः ।

अत एव न कर्माङ्गं ब्रह्मोपवेशनम् । क तर्हि । इदं भूमेरित्यस्यानन्तरमेव वक्ष्यामः ॥ २६ ॥

अव्यावृत्तिं यज्ञाङ्गैरव्यवायं चेच्छेत् ॥ २७ ॥

होमाङ्गैः सहाग्नेः पराङ्मुखो न भवेत् । अन्तरा च न गच्छेदित्यर्थः । कुर्यादित्यध्याहारात् । सिद्ध इच्छेदिति यदिप्रमादाद्व्यावृत्तिं व्यवायं वा कुर्यात्तदा पुनः प्रतिमुखं स्यात्परयागच्छेदित्येवमर्थम् । पाकयज्ञसाधारणमिदं सूत्रम् । एवमुत्तरपरिभाषा ॥ २७ ॥

इति श्रीरुद्रस्कन्दविरचितायां गृह्यवृत्तौ प्रथमपटले प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयः खण्डः ॥ २ ॥

---

पूर्वे भागे वेश्मनो गोमयेनोपलिप्य तस्य मध्यदेशे लक्षणं कुर्यात् ॥ १ ॥

गृहस्याभिमुखे गृहस्यैकदेशे भागे पूर्वोपलिप्तेऽपि स्वयं गोशकृतोपलिप्योपलिप्तस्य मध्यदेशे लक्षणं कुर्यात् । लक्षणस्य स्वरूपमन्यतोऽवगन्तव्यम् । पांसुभिः स्थण्डिलं कुर्यादित्यर्थः ॥ १ ॥

दक्षिणतः प्राचीं रेखामुल्लिख्य ॥ २ ॥

स्थण्डिलस्य दक्षिणापरात् । कोणादारभ्य प्रागपवर्गां रेखां लिखेत् ॥ २ ॥

तदारम्भादुदीचीं तदवसानात्प्राचीं तिस्रो मध्ये प्राचीः ॥ ३ ॥

पश्चिमरेखारम्भा उत्तरोत्तराः । कुतः । अविरुद्धं सर्वं प्रागपवर्गमुदगपवर्गं वा स्मरन्ति यतः । एवं सर्वत्रानादेशे ॥ ३ ॥

तदायुष्य ॥ ४ ॥

उल्लिखितं स्थण्डिलमद्भिरभ्युक्ष्य ॥ ४ ॥

अग्निमुपसमाधाय ॥ ५ ॥

स्थण्डिलस्य मध्येऽग्निसंमुखमभिमुखं निधाय । उपेति । उपयोगी यत्र यत्र शास्त्रेण होमार्थोऽप्यग्निर्विधीयते तत्र तत्रोपलेपनाद्येवं निधानान्तं कुर्यादित्येवमर्थम् । यथा सर्पबलौ तथा सर्वत्रैतद्धोमेषु कुर्यादिति वचनादाहोमार्थे न स्यात् ॥ ५ ॥

इमं स्तोममिति परिसमूह्य तृचेन ॥ ६ ॥

निधीयमानस्याग्नेः प्रकीर्णाञ्छकलान्समन्तत एकीभावं प्रापयित्वा प्रत्यृचं परिसमूहनं प्रागुपक्रममुदगपवर्गं कुर्यान्निराकाङ्क्षत्वादृचाम् । अस्य विनियोगमात्रपरत्वाद्यार्थैकयकल्पनायां प्रयुक्त्वम् ॥ ६ ॥

पश्चादग्नेर्भूमौ न्यञ्चौ पाणी कृत्वेदं भूमेरिति ॥ ७ ॥

अग्नेरनन्तरमेव पश्चात्तृणादिभिः सहितौ भूमिगतावाङ्मुखौ हस्तौ कृत्वेदं भूमेरिति जपेत् ' अन्येषां विन्दते धनम् ' ' अन्येषां विन्दते वसु ' इत्यन्ततः । अनयोस्तुल्यार्थत्वाद्विकल्पेन मन्त्रान्तरयम् ॥ ७ ॥

तयोर्नियममाह—

वस्वन्तं रात्रौ ॥ ८ ॥

रात्रिकाले विहितं यद्रात्रौ क्रियते तत्र वस्वन्तमेवानन्तरं ब्रह्मोपवेशनम् । कुतः । अग्निनिधानात्पूर्वं तावद्ब्रह्मोपवेशनं दक्षिणतोऽग्नेरिति वचनात् । परतोऽप्युपसमाधाय परिसमूह्य न्यञ्चौ पाणी कृत्वेदं भूमेरिति जपेदित्युक्त्वा प्रत्ययेन समानकर्तृकस्योक्तत्वात् । अवान्तरप्रयोगैकपरत्वावगते बोधादुपवेशनम् । इदानीं तु विरोधाभावाद्वक्ष्यमाणस्य ब्रह्मापेक्षत्वादुपवेशनम् । पूर्वोक्तानां सूत्रैक्ये सत्यपि सुखबोधार्थं सूत्रावच्छेदः कृतः ॥ ८ ॥

पश्चाद्दर्भानास्तीर्य दक्षिणतः

प्राचीं प्रकर्षेदुत्तरतश्च ॥ ९ ॥

अग्नेः पश्चात्प्रागग्रान्दर्भानास्तीर्य स्थण्डिलमुदगपवर्गान्प्रकीर्य

दक्षिणतः प्रकीर्णानग्रेषु गृहीत्वा प्राचीं प्रकर्षेत्तथोत्तरतश्च प्रकर्षेद्यथाग्रैः पुरस्तादग्राणि संगतानि स्युः ॥ ९ ॥

अपकृष्य वा ॥ १० ॥

पश्चात्स्तरणमात्रमेवेत्येव कल्पः ॥ १० ॥

पूर्वोपक्रमं प्रदक्षिणमग्निं स्तृणुयान्मूलान्य-
ग्रैश्छादयंस्त्रिवृतं पञ्चवृतं वा ॥ ११ ॥

अग्नेः पुरस्तात्पूर्वं ततो दक्षिणतस्तत उत्तरतस्ततः पश्चाच्च स्तरतः समापनीयं प्रदक्षिणमिति वचनान्मूलान्यग्रैश्छादयन्निति वचनात्। उदगपवर्गे हि मूलैरग्राणि छादितानि न स्युः। नन्वग्राण्युत्क्षिप्य किमिति न स्तरणम्। छादयंस्तृणुयादिति स्तर्यमाणावस्थायामेव स्तर्यमाणैश्छादनोपदेशात्। किं तर्हि मूलान्यग्रैश्छादयन्नित्यनेनैव सिद्धत्वात्पूर्वोपक्रमं प्रदक्षिणमित्यनर्थकम्। न। अन्यदपि यत्प्रतिदिशं तत्पूर्वोपक्रमं प्रदक्षिणमिति ज्ञापनार्थं यथा प्रतिदिशमुपलिम्पेदिति। अत्रापि स्फुटीकरणार्थत्वादत्रैवोक्तम्। अत्र तु प्रथमं दक्षिणतस्तत उत्तरत इत्यपि प्रदक्षिणाशब्दस्यार्थोऽवगन्तुं शक्यते। इदं स्तरणं त्रिः कृत्वा पञ्च कृत्वो वा। पूर्वसूत्राभ्यां विहिते सकृत्सकृदेव वितृपक्षेऽवाद्यं स्तरणमन्यद्वये द्वितीयमितरत्र तृतीयमित्युपदेशः ॥ ११ ॥

उपविश्य दर्भाग्रे प्रादेशमात्रे प्रच्छिनत्ति न
नखेन पवित्रेस्थो वैष्णव्याविति ॥ १२ ॥

उपविश्येति। इतः प्रभृति धर्मासनार्थं प्रच्छिनत्ति न पाणिनोपधिमन्तर्धायेति गृह्यान्तरे ॥ १२ ॥

अद्भिरुन्मृज्य विष्णोर्मनसा पूते स्थ इतीति ॥ १३ ॥

उत्, ऊर्ध्वमुदगग्रे। अङ्गुष्ठाभ्यामनामिकाभ्यां च संगृह्य 'त्रिराज्यमुत्पुनातु देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति मन्त्रस्यापि त्रिरावृत्तिः। प्रदेशान्तरे द्विस्तूष्णीमिति यत्नान्तरादुत्पुनाति। प्राचीमूर्ध्वं क्षिपत्यच्छिद्रेण पवित्रेणेति संश्लिष्टयोः समुदायमाह ॥ १३ ॥

आयुक्ष्यायावनु प्रहरेत् ॥ १४ ॥

अद्भिरभ्युक्ष्य पवित्रे उदगग्रे अग्नौ प्रक्षिपेत् । अन्विति । उत्पवने-ऽनुगते उदगग्रे इत्यर्थः ॥ १४ ॥

आज्यमधिश्रित्योत्तरतः कुर्यात् ॥ १५ ॥

अग्नेरुत्तरे भागे स्थाल्या सहाऽऽज्यमुपनिधाय कुर्यात् । किं कुर्यात् । शाखान्तरादृश्यते द्विरुल्मुकेनाभिज्वाल्य द्वे दर्भाग्रे प्रक्षिप्य त्रिरुल्मुकेन प्रदक्षिणं परिहृत्योत्तरतो बर्हिषि निदध्यादित्यर्थः ॥ १५ ॥

दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुम-

न्यस्वेत्युदकाञ्जलिं प्रसिञ्चेत् ॥ १६ ॥

सदक्षिणेन जानुना भूमिगतो ब्रह्माग्न्योरन्तर उदकपूर्णमञ्जलिमवसिञ्चेत् ॥ १६ ॥

अनुमतेऽनुमन्यस्वेति पश्चात्सरस्व-

तेऽनुमन्यस्वेत्युत्तरतः ॥ १७ ॥

होमाङ्गानामप्युत्तरतो लेखावदञ्जलिसेको हस्तानुगुण्यात् ॥ १७ ॥

इष्टे कल्पना यतः—

देवसवितः प्रसुवेति प्रदक्षिणमग्निं

पर्युक्षेदभिपरिहरन्हव्यम् ॥ १८ ॥

प्रसिञ्चेरिति प्रकृते पर्युक्षेदित्येतावदेव पर्युक्षणसंज्ञार्थम् । पर्युक्षणवर्जमित्यत्र होमाङ्गं सर्वमन्त्रमावयन्माणुपक्रममुदकाञ्जलिं पर्युक्षेत ॥१८॥

सकृत्त्रिर्वा ॥ १९ ॥

सकृन्मन्त्रमुक्त्वा त्रिर्वा पर्युक्षेत् ॥ १९ ॥

समिध आधाय ॥ २० ॥

औदुम्बरीः खादिराः पालाशीर्वा तदभावे याज्ञिकाः पञ्चदश समिधोऽग्नावाधाय । एकामुत्तरतो बर्हिषि निदध्यादित्यध्याहारः शाखान्तरात् । अनन्तरमग्नेर्वक्ष्यमाणमाचरेत् ॥ २० ॥

प्रपदं जपित्वोपताम्य कल्याणं ध्याय-
न्वैरूपाक्षमारभ्योच्छ्वसेत् ॥ २१ ॥

तपश्चेत्यारभ्य ब्रह्मणः पुत्राय नम इत्येवमन्तमन्त्रस्य प्रपदशब्दो वाचकः । जपित्वेति । जपन्नित्यर्थः । विरूपाक्षोऽसीत्यस्य प्रपदमध्यपातित्वात्पौर्वापर्यानुपपत्तेः । कल्याणशब्दोऽपवर्गवाचकः । निरुच्छ्वासो भूत्वा प्रपदं जपन्भूर्भुवस्वरोमित्योंकारे परमात्मज्ञानं मे भूयादिति ध्यायन्नित्यर्थः । यथासामर्थ्यमोंकारं धारयित्वा विरूपाक्षोऽसि दन्ताञ्जिरित्युच्छ्वसेदित्यर्थः ॥ २१ ॥

नित्येष्विव काम्येष्वाह

प्रतिकामं काम्येषु ॥ २२ ॥

काम्यग्रहणमुपलक्षणम् । यज्ञानसाध्यविशेषवतां कर्मणां तेषु विशेषमेव परामृश्येदमेव मे भूयादिति ध्यायन्नित्यर्थः ॥ २२ ॥

सर्वत्रैतद्धोमेषु कुर्यात् ॥ २३ ॥

सर्वत्रेति व्याप्त्यर्थम् । एतदुपलेपनादिप्रपदान्तं सर्वं पदजातं सर्वत्र होमात्मके कर्मणि तत्तद्विशेषेभ्यः प्रागेव कुर्याद्यानि तु धृतेऽग्नौ तस्मिन्नेव देशे क्रियन्ते तेष्वर्थलोपादग्न्युपसमाधानान्तस्य निवृत्तिः ॥ २३ ॥

इति श्रीरुद्रस्कन्दविरचितायां गृह्यवृत्तौ प्रथमपटले
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीयः खण्डः ॥ ३ ॥

---

ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुर-
वेऽनुज्ञातो दारान्कुर्वीत ॥ १ ॥

ब्रह्म वेदः । वेदाध्ययनार्थानि गोदानादीनि व्रतान्यग्नीन्धनादीनि च स्मृतिकारैरुक्तानि लक्षणया ब्रह्मेत्युच्यन्ते तान्यनुतिष्ठन्नेकां शाखामधीत्याध्ययनप्रयोगमर्थनिश्चयपर्यन्तं षडङ्गं परिसमाप्योप गुरुसमीपं निष्पाद्य स्वयं गुर्वभिलषितमुपमर्जयित्वा तद्गुरुं तदर्थं चोपन्याहृत्य समीपमा-

हृत्य गुरव आचार्याय दत्त्वा तेनैव गुरुणा त्वं स्नानं विवाहं च कुर्वित्यनुज्ञातः स दारान्भार्यां कुर्वीत । यथा गुरवेऽनुज्ञात आत्मानं प्रति भार्या भवति तथा कुमारीं संस्कुर्यादित्यर्थः । दारानिति बहुत्वपुंस्त्वे अविवक्षिते आविष्टलिङ्गत्वात् । एवं वृत्त्यर्थेऽध्यापनेऽदृष्टार्थे तु गुरुदक्षिणामदत्त्वाऽप्यनुज्ञामात्रादेव विवाहः । सहस्रं श्वेतं चाश्वं प्रदायानुज्ञातो वेतिश्रुतेः । तदर्थं चोपन्याहृत्य गुरवेऽनुज्ञातो वेति वाशब्दं केचिदध्याहरन्ति । दक्षिणां दत्त्वा नोदकपूर्वमिदानी षट्त्रिंशदाब्दिकं तदर्धकं पादादिकं वा ब्रह्मचारिव्रतम् । ब्रह्म तच्चरित्वा वेदं सकलमनधीत्यापि विवाहः । अथ वा व्रतमचरित्वाऽपि वेदं सकलमधीत्यापि विवाह इति । अस्मिन्व्याख्याने नार्थावबोधपर्यन्तमध्ययनं चेति केचिदाहुः । अपरा व्याख्या वा शब्दाध्याहारेण ब्रह्मचारी वेदमधीत्य वेतिद्वादशवार्षिकमध्ययनं केचिदाहुः । 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविधिकं व्रतम् । तदर्धकं पादिकं वा ग्रहणान्तिकमे[व]वेति' । अस्मिन्ना(न्मा)नवे श्लोके वेदत्रयार्थत्वेन षट्त्रिंशदादेरुक्तत्वाद्वेदानधीत्य वेदौ वा वेदं वाऽपीति चानेनैवोक्तत्वाद्वेदह्रासवशात्कालह्रासोऽप्युक्त एवेति वर्णाविचरणमप्यनुज्ञातमेवेति तद्युक्तमयुक्तं वेति विचारणीयम् । ब्रह्मचारीत्यस्यापरा व्याख्या वेदव्रतानि चत्वारि गोदानं व्रातिकमादित्यव्रतं महानाम्निकमित्येतानि गोदानं व्रातिकमादित्यव्रतं महानाम्निकमौपनिषदमिति वा ब्रह्म तच्चरित्वा विवाह इति । अस्यार्थस्य न्यायमूलत्वं केचिदाहुः । ब्रह्मचारिव्रतानि पुरुषसंस्कारार्थानि नाध्ययनाङ्गानि पुरुषोद्देशेन विधानात् । अतस्तद्विधिपर्यवसान्निबन्धनोऽयं व्रतस्नानोपदेशः । अध्ययनविधिरपि न विचारपर्यन्तः । रागत एव तत्सिद्धेः । अतस्तन्निबन्धनो वेदस्नानोपदेश इति । तदिदं मीमांसकैर्नेष्यते । वाक्यशेषात् । सिद्धे कुर्वीतेति नान्दीमुखादेरुपसंग्रहणार्थम् ॥ १ ॥

आप्लवनं च ॥ २ ॥

उपन्याहृत्य गुरवेऽनुज्ञातः कुर्वीतेत्यस्यानु[प]कर्षणार्थश्चकारः । आप्लवनं स्नानं समावर्तनम् । दाराप्लवन इति वक्तव्ये पृथग्ग्रहणं पृथक्प्रयोगार्थम् । अत एव कालोऽपि भिद्यते व्युत्क्रमस्तु दाराधिगन्तुरेव प्लावनं न नैष्ठिकस्येत्येवमर्थम् । इतरथाऽध्ययनपरिसमाप्तिनिमित्तमाप्लवनमित्युपसंकेतः ॥ २ ॥

तयोराप्लवनं पूर्वम् ॥ ३ ॥

जायापत्योर्विवाहात्पूर्वमाप्लवनं कर्तव्यम् । तत्पुरुषस्य मन्त्रक्रमानुसारेण पुरस्ताद्वक्ष्यते ॥ ३ ॥

आप्लवने पुरस्तादित्यारभ्याऽऽह—

मन्त्राभिवादात्तु पाणिग्रहणस्य पूर्वं व्याख्यानम् ॥ ४ ॥

वध्वाः पाणिर्गृह्यतेऽस्मिन्निति पाणिग्रहणं विवाहः । विवाहस्य काले वध्वा आप्लवनं मन्त्रलिङ्गानुसारेण कर्तव्यमिति सूत्रार्थः । तुशब्दो विशेषणार्थः । यद्यप्याप्लवनं प्रसिद्धं तथाऽपि वध्वा उपस्थाप्लवनमात्र आप्लवनशब्दः । मन्त्राभिवादादिति पूर्वमिति । यत्पूर्वमाप्लवनं पूर्वमन्त्रद्योतितसुरासाधकं तदेवोत्तरमन्त्राभ्यामपि कर्तव्यमित्येवमर्थम् । अत एव मध्वाज्यशब्दाभ्यामपि सुरैव लक्षणयोच्यते । सुरेति चात्र पिष्टसंयुक्तमुदकं लक्षणया पैष्टिकसुरासादृश्यादुच्यते मुख्यसुराया अस्पृश्यत्वादनाचाराच्च । यीति विवक्तवाचि यिविक्तकर्तृकत्वम् । पाणिग्राहज्ञातिकर्तृकमिदमाप्लवनमित्यर्थः । अमुमिति मन्त्रे च पत्युः परोक्षवन्निर्देशादप्ययमर्थो विज्ञायते । अभ्याहारात्सिद्ध आख्यातमिपद्यपि वृद्धैरन्यद्व्याख्यातं तदप्यत्र कर्तव्यमिति किं तन्नान्दीमुखम् । कौतुकबन्धनं संकल्प इत्येवमादि एवं प्रयोगः—विवाहदिवसात्पूर्वेद्युर्नान्दीमुखश्राद्धं कुर्यात् । युग्मान्ब्राह्मणान्दर्भेषूपवेश्य नान्दीमुखेभ्यः पितृभ्यः स्वाहा नान्दीमुखेभ्यः पितामहेभ्यः स्वाहा नान्दीमुखेभ्यः प्रपितामहेभ्यः स्वाहेति लौकिकाग्नौ भोजनार्थं पक्वेन हविष्येणान्नेन चरुतन्त्रेण परिचरणतन्त्रेण वा हुत्वा गन्धपुष्पधूपदीपवासोभिर्यथालाभं यथाविभवमर्चयित्वा भोजयित्वोच्छिष्टसमीप उदगग्रेषु दर्भेषु दधिबदराक्षतमिश्रान्पिण्डान्दद्याद्धोममन्त्रैरुदगपवर्गांस्स्वाहास्थाने तृप्तिरस्त्विति विकार एतन्नान्दीमुखश्राद्धम् । अत्र श्लोकः—

पुंसि नामान्नचौलोपस्थानपाणिग्रहेषु च ।
अन्वाधाने तथा सोमे दशस्वभ्युदयं स्मृतम् । इति ॥

केचिन्नान्दीमुखश्राद्धमागामिनः श्राद्धस्य प्रत्याम्नायमाहुः । स्वधास्त्विति पिण्डदाने मन्त्रान्तमाहुः । ततः पत्युर्ज्ञातयो वध्वाः स्वामिनमागत्य वरणं कुर्युः । भारद्वाजगोत्रायोमामहेश्वरशर्मणे काश्यपगोत्रजां भवानीनाम्नीं धर्मप्रजार्थं वृणीमह इतिवद्यथागोत्रं यथानाम वरणं कुर्युः । दास्यामीति प्रतिवचनम् । तत आप्लवनम् । कामवेदत(?) इत्यादिभिर्मन्त्रैः स्वाहाकारान्तैः पिष्टसंयुक्तेनोदकेन पत्युर्ज्ञातयः शिथिलीकृतवस्त्रापा वध्वा उपस्थमाप्लावयन्ति । प्रतिमन्त्रममुमित्यत्र पतिनाम ब्रूयु-

विष्णुशर्माणमिति वत् । ततः पुण्याहवाचनम् । सर्वकर्मसु पुण्याहवाचनं कर्तव्यमित्याचार्या आहुः । नान्दीमुखपुण्याहवाचनेऽनित्ये आचार्येण वचनाकरणे अभ्युदये विशेषः । ततो वध्वाः स्वामी वधूमङ्कमारोप्य भारद्वाजगोत्रायोमामहेश्वरशर्मणे काश्यपगोत्रजां भवानीनाम्नीं तुभ्यमिमां प्रजासहत्वकर्मभ्यः प्रतिपादयामीति यथागोत्रं यथानामोक्त्वा पाणिग्राहस्य पाणावुदकं सिञ्चेत् । ततो ब्रह्मोपवेशनान्तम् ॥ ४ ॥

तत आह—

ब्राह्मणः सोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं गत्वोदङ्मुखस्तिष्ठेत् ॥ ५ ॥

उत्तरयाससा सकर्णं प्रावृतशिरा उदकपूर्णकुम्भं शिरसा धारयन्नुदक्प्रदेशात्पूर्वेणाग्निं गत्वा ब्राह्मणः पुरस्तादुदगग्रेषु दर्भेषूदङ्मुखस्तिष्ठेदाभूर्ध्न्यवसेकाद्वाग्यतः ॥ ५ ॥

स्नातां सह तेनाऽऽच्छाद्य या अकृन्तन्नित्यानीयमानायां पाणिग्राहो जपेत्सोमोऽददिति ॥ ६ ॥

पाणिग्राहो वधूदेशं गत्वा पूर्वमेव सह शिरसं स्नातां वधूं नववस्त्रयुग्मेन या अकृन्तन्परिधत्तेत्याभ्यां स्वयमेवाऽऽच्छाद्य ततो मङ्गलसूत्रं बध्वाः पुनरग्निदेशं गत्वा प्रदात्रा तद्देशं वध्वां प्राप्य प्राणायां तां वीक्ष्य पतिः सोमोऽददिति जपेत् । या अकृन्तन्नित्यधरवस्त्रदानम् । ततः परिधत्तेत्युत्तरीयदानम् । प्रमे पतियान इति वधूर्जपेत् । मास्याः पतियान इति पतिर्जपेत् । मन्त्रलिङ्गात् ॥ ६ ॥

पाणिग्राहस्य दक्षिणत उपवेशयेत् ॥ ७ ॥

संनिधानात्सिद्धे पाणिग्राहस्येति पत्युरेवाऽऽसन उपवेशनार्थं दर्भेषूपवेशयेद्वधूमानीताम् । ततः परिस्तरणादि प्रपदान्तं कृत्वाऽऽज्यसंस्कारानन्तरमाज्यं स्रुवमिध्मं शमीपलाशमिश्रं सलाजं च शूर्पमग्नेरुत्तरतो बर्हिषि निदध्याद्दृषत्पुत्रश्चाग्नेः । पश्चाद्दृषत्पुत्रोदकुम्भयोः परिषेचने बर्हिर्भावः ॥ ७ ॥

अहत्पत्वाज्यकृजपानन्तरमाह—

अन्वारब्धायां स्रुवेणोपघातं महाव्या-
हृतिभिराज्यं जुहुयात् ॥ ८ ॥

अनुः साहश्ये । उपवेशनवद्दक्षिणेन पाणिना दक्षिणं बाहुं संनिधा-
नात्स्पृष्टवत्यां कन्यायां बर्हिषि निहितेन स्रुवेणोपहत्य संस्कृतमाज्यं
भूः स्वाहा भुवः स्वाहा स्वः स्वाहेति प्रतिमन्त्रमग्नौ जुहुयात्पतिः ।
स्रुवस्य स्वरूपमध्वरे प्रसिद्धम् । ननूपघातमित्यवाच्यमर्थसिद्धत्वात् ।
आज्यमितिवावाच्यमाज्यं जुहुयाद्धविषोऽनादेश इति वचनात् । जहुया-
दिति चावाच्यं वाक्यशेषात्सिद्धेः । इदं तर्हि प्रयोजनं यत्रोपघातमिति
वक्ष्यति तत्राऽऽज्यं प्रधानद्रव्यं यत्र वा मन्त्रमनुक्त्वा होमं विधास्यति
तत्र तत्र व्याहृतिभिर्जुहुयादित्याज्यमेव च द्रव्यं परिभाषितत्वात् ॥ ८ ॥

समस्ताभिश्चतुर्थी ॥ ९ ॥

भूर्भुवः स्वः स्वाहेति मन्त्रः । अन्वारब्धायामिति वर्तते । अयं होमो
नोपघातादिसूचितेष्वस्ति । समस्ताभिश्चेति सिद्धे चतुर्थीति द्व्यक्षरनि-
र्देशात्त्रिष्वपि विवाहहोमेषु कथम् । चतुर्थी स्यादित्यधिकवचनात् ।
चतुर्थी स्यादिति वीप्सार्थो गम्यते नातिप्रसङ्गः । संनिधिविशेषाच्च
तद्वीप्सासिद्धिः ॥ ९ ॥

एवं चौलोपनयनगोदानेषु ॥ १० ॥

चतुर्थीमात्रातिदेशः । ननु गोदानग्रहणमनर्थकं गोदाने चौलवत्कल्प
इत्यनेनैव सिद्धत्वात् । न । तत्र केशकल्पमात्रस्यातिदेशात् ॥ १० ॥

अग्निरेतु प्रथम इति षड्भिश्च पाणिग्रहण इति ॥ ११ ॥

चशब्दोऽन्वारम्भानुकर्षणार्थः ॥ ११ ॥

नाऽऽज्यभागौ न स्विष्टकृदाज्याहुतिष्वनादेशे ॥ १२ ॥

उपघातादिशब्दसूचितास्वाज्याहुतीषु सतीष्वाज्यभागौ स्विष्टकृच्च
न स्युः । नाऽऽज्यभागौ स्विष्टकृदिति वक्तव्ये पृथग्ग्रहणं यत्र न
स्विष्टकृत्तत्राऽऽज्यभागौ न स्त इत्येवमर्थम् । यथा वास्तुहोमे सौविष्टकृ-
तीमष्टम्येति पशावादेशात्तत्र प्रतिषेधाभावार्थमनादेश इत्युक्तम् ॥ १२ ॥

सर्वत्रोपरिष्टान्महाव्याहृतिभिः ॥ १३ ॥

सर्वत्रेति व्याप्त्यर्थम् । प्रतिकर्म विशेषविहितं कृत्वा भूः स्वाहा भुवः स्वाहा स्वः स्वाहेत्याज्यं जुहुयात् । प्रपदान्तवत्स्वेव प्रयुक्ताज्यलाभान्नान्वारम्भः ॥ १३ ॥

प्राजापत्यया च ॥ १४ ॥

प्रजापते न त्वदेतानीति प्राजापत्यया । चशब्दः सर्वत्रोपरिष्टादित्यस्यानुकर्षणार्थः ॥ १४ ॥

प्रायश्चित्तं जुहुयात् ॥ १५ ॥

प्राजापत्ययेति वर्तते । यत्रान्तरितविपर्यासादौ प्रायश्चित्तापेक्षा तत्र प्राजापत्यया स्रुवेणाऽऽज्यं जुहुयात्संधानार्थमिति सूत्रार्थः । अन्तरितेऽन्तरितं कृत्वा प्रायश्चित्तसंनिपत्योपकारकाङ्गान्तराय उपकार्ये निवृत्तप्रयोजने प्रायश्चित्तमेव नान्तरितस्य पुनः करणम् । पदार्थविपर्यासे प्रायश्चित्तमेव न क्रमार्थं पुनरावृत्तिः । आज्यसंस्कारात्पूर्वं चेन्निमित्तं स्यात्संस्कृताज्येन प्रायश्चित्तं कुर्यात् । उत्तरकाले चेन्निमित्तं परिज्ञानानन्तरमेव । वाक्यशेषात्सिद्धे जुहुयादित्यग्न्यनुगतादावप्येतदेव प्रायश्चित्तमित्येवमर्थम् । इतरथा प्रकृतत्वात्प्रपदान्तवत्स्वकर्मस्वेव स्यात् । वह्निस्तन्त्रे त्वाज्यतन्त्रेण परिचरणतन्त्रेण वा प्रायश्चित्तहोमः । तन्त्रमध्ये तु तत्तन्त्रमेवोपजीवति । मन्त्रलिङ्गादपि सर्वत्र प्रायश्चित्तार्थता गम्यत एव । अयं मन्त्रार्थः—हे प्रजापते यान्येतानि निमित्तानि प्रजातानि प्राजापत्यानि तानि न त्वदेतानि त्वदन्यो न कश्चिदपि प्रतिसमाधानेन परिता बभूव न पदार्थी कर्तुं समर्थः । अतो यत्समाधानकामा वयं तुभ्यं जुहुमः । तदस्माकमस्तु । तत्समाधानाच्च रयीणां धनतुल्यानां पुरुषार्थानां स्वयं स्वामिनो भूयास्मेति । स्वद्रव्यत्यागलक्षणानां कर्मणां कालात्यये यत्कुसीदमिति होमः प्रायश्चित्तं मन्त्रलिङ्गात् । प्रपदान्तवत्कर्मलोप आज्यतन्त्रमितरत्र परिचरणतन्त्रम् । अयं मन्त्रार्थः— यत्कुसीदमृणतुल्यमवश्यं प्रदेयमप्रदत्तं मयेह जन्मनि येन प्रदत्तेन निधिना निधितुल्येन यमस्य सदने यथेष्टं चरामि तत्प्रदेयमिदमेवाऽऽज्यं तत्कार्यकरणं हेऽग्ने जीवन्नेवाहं ते तुभ्यं तत्प्रति तत्प्रदेयं प्रति तत्समाधानाय ददामीत्यर्थः । सर्वत्राङ्गप्रेषप्रयोगसमाप्त्युत्तरकालं यदि स्मरेत्तत्र न पुनः करणं नापि प्रायश्चित्तम् । प्रधानसंबन्धायोगाद्विगुणमेव तदस्तु ।

प्रधानप्रेषे तु साङ्गस्य पुनरावृत्तिः । बहुप्रधानके तु भ्रष्टस्यैव प्रधानस्य साङ्गस्याऽऽवृत्तिर्नाभ्रष्टस्य । एवमकरणेऽपि शाट्यायनिप्रोक्तं प्रायश्चित्तम् । प्राजापत्यया यत्कुसीदमित्येतेन च सवत्र विकल्प्यते । पूर्ववत्तन्त्रनियमः । अनुगतेऽग्नावग्न्यन्तरसंसर्गे रजस्वलाभिगमने दिवामैथुने कुमारस्य संस्काराकरणे मेखलाधारणे संध्यालोपे च शाट्यायनिप्रोक्तं प्रायश्चित्तं स्यात् । अनुगतादौ दोषलघुत्वगुरुत्वापेक्षया चात्र नियमः । यथाल्पकालविच्छेदे परिचरणतन्त्रं बहुकालविच्छेद आज्यतन्त्रमिति । भूः स्वाहा भुवः स्वाहा स्वः स्वाहा पाहि नो अग्न एनसे स्वाहा पाहि नो विश्ववेदसे स्वाहा यज्ञं पाहि विभावसो स्वाहा सर्वं पाहि शतक्रतो स्वाहा पाहि नोऽग्न एकहयं पुनर्नेर्जा(?) निवर्तस्व सहरय्या निवर्तस्वेति तिसृभिः पुनश्च व्याहृतिभिराज्यं जुहुयादिति शाट्यायनिविधानम् पुनराधाननिमित्ते तु पुनराधानमेव कुर्यात् । अग्नेर्द्वादशाहं विच्छेदे द्वादशाहमेवौपासनहोमविच्छेदोऽग्नेः स्वेच्छया त्यागो जायामग्नोः प्रवासः श्वकाकचण्डालरजस्वलाद्विस्पर्शः समिन्नाश इत्येतानि पुनराधाननिमित्तानि । तस्य विधिः—दिवा हविष्यमन्नमेकभुक्तं भुक्त्वा ब्रह्मचारिव्रतोऽपरेद्युरुपवासं कुर्वंस्तपश्च तेजश्चेत्यादि ब्रह्मणः पुत्राय नम इत्येषमन्तं शतकृत्वोऽष्टकृत्वश्चाऽऽरण्ये जपित्वा देवकृतस्येतीतिचाऽऽद्यौ सस्येरयन्तः प्राक्तथा जपेत् । ततः श्वोभूतेषु नमामीत्येताभ्यां जलमवगाह्य ब्राह्मणस्यानूचानस्याग्निमतो गृहात्तदलाभे यथासंभवं श्रौतस्मार्तपरस्य गृहाद्वह्निमाहृत्य प्रपदान्तं कृत्वा व्याहृतिभिर्हुत्वा भूः स्वाहेति त्रिर्जुहुयात् । ततो भुवः स्वाहेति त्रिः । ततः स्वः स्वाहेति त्रिः । ततश्च प्रतिमन्त्रं द्वादशकृत्वः । ततश्च प्रतिमन्त्रं त्रिःकृत्वः । तत उत्थाय नमस्काराञ्जलिं कृत्वाऽग्निं दूतमग्निर्मूर्धा त्रिस्तिग्मेनाग्ने रक्षा ण इति चतुर्ऋचं जपेत् । अथोपविश्याग्न आयाहि वीतयेऽग्निं वो वृधं तं नमस्तेऽग्न ओजस उपत्वाऽग्ने दिवे दिव इति चतसृभिराज्यं जुहुयात् । सोमं राजानं सीविष्टकृतं च तत उपरिष्टाद्धोमादिः । नात्र वध्वा अन्वारम्भोऽग्निसंस्कारत्वात् । सर्वेषां प्रपदान्तानामन्ते वामदेव्यगानं तदृग्जपश्च सार्धं प्रातर्होमान्ते यथासंख्यं गोसूक्ताश्वसूक्तगानम् । अग्निधारणासंभवेऽयं ते योनिरिति समित्समारोपणं या तेऽग्न इत्यात्मसमारोपणमुभयत्र लौकिकाग्नावुपावरोह इत्यवरोहणम् । इदं सर्वं पुनराधानविधावुक्तम् । दिवा हविष्यभोजनादिशेषकृतजपान्तं स्मृत्युक्ताभ्यां कृच्छ्रचान्द्रायणाभ्यां विकल्प्यते तत्रैवं

विनिवेशः—अकामकृते निमित्ते संधानसंभवे सत्यनुपेक्षया मिदमुपेक्षायां तु कृच्छ्रः । कामकृते चान्द्रायणम् । अत्रापरं मतम्—कृच्छ्रचान्द्रायणे त्रेताग्निविषय एव गृह्याग्निनाशे पुनराधानं विध्युक्तमेवेति गृह्याग्नेर्द्वादशाहविच्छेदे पुनराधानमित्युक्तम् । पुनराधानविधेरत्रैव गृह्ये संगृह्योपदेशः । गृह्याग्न्यनुगते मासादूर्ध्वं पुनराधानम् । ततः प्राग्द्वादशाहादूर्ध्वं शाट्यायनिप्रोक्तमाज्यतन्त्रेण पाहि त्रयोदश होमः । तत प्राक्स एव परिचरणतन्त्रेणेति । आज्यतन्त्राणां प्रकृतिर्विवाहः । परिचरणतन्त्राणामौपासनहोमः । चरुतन्त्राणां दर्शपूर्णमासौ । पशुतन्त्राणामष्टकापशुः । आज्यतन्त्रे वरणस्याऽऽवृत्तिस्तस्य प्रधानार्थत्वात् । अर्थलोपदाह्य(ह)वनस्यापि समानयाऽमुमिति मन्त्रलिङ्गात् । भर्तृसंबन्धार्थं मार्गक्लृप्तिपरत्वादप्रवृत्तिः । लेखाचतुर्थीहोमयोरपि न पुनः क्रिया होमत्रयात्मकस्य मार्गस्यैकत्वात् । दृषत्पुत्रस्य चाऽऽक्रमणार्थत्वादप्रवृत्तिः । शूर्पलाजानां च लाजहोमार्थत्वान्न निधानम् । आज्यतन्त्रेष्वन्वारम्भस्तु संस्कारकर्मसु संस्कार्यार्पण कर्तव्य एव संस्कारार्थत्वात् । नान्येषु होमानां प्रवृत्तिरपरिष्टाद्धोमान्वर्जयित्वा प्रधानत्वात् । भवतु वा व्याहृतिहोमानामङ्गत्वं तथाऽपि दर्शपूर्णमासयोरप्येतत्प्रकृतित्वात्सर्वेषु पाकानामुपघाताद्विसूचनम् । एवं चौलोपनयनगोदानेष्विति च नियमार्थं भविष्यति । प्रयोगमध्येनाऽऽज्यभागावित्यादेः सर्वत्रार्थस्य विधानस्यैतत्प्रयोजनं कथं नामितरपाकयज्ञानामेवेति कर्तव्यतास्वन नोपदेशान्तरे प्रवृत्तिः । न पुरस्ताद्वक्ष्यमाणानां हुत्वोपोत्तिष्ठत इत्येवमादीनामिति ॥ १५ ॥

प्रकृतमनुसरामः—

हुत्वोपोत्तिष्ठतः ॥ १६ ॥

व्याहृतिभिर्हुत्वोपश्लिष्टौ जायापती सहोत्तिष्ठतः । वध्वा दक्षिणं पाणिं दक्षिणेन पाणिना गृह्णन्पतिरुत्तिष्ठेत्तस्यास्वातन्त्र्यात् । हुत्वेति समानकर्तृकत्वहोमेऽप्युपश्लेषार्थम् । अतोऽन्वारब्धायां होमः पूर्ववदेव नान्वारम्भः । पतिपाणेर्होमे व्यापृतत्वात् ॥ १६ ॥

अनुपृष्ठं गत्वा दक्षिणतोऽवस्थाय वध्वञ्जलिं गृह्णीयात् ॥ १७ ॥

अनुः सादृश्ये । उत्थानवत्—पाणिं गृह्णन्नेव तस्याः पृष्ठदेशेन दाक्षिणतो गत्वा दर्भेषु स्थित्वा कोशाञ्जलिकाभ्यां हस्ताभ्यामुपादद्यात्स्वयं(?) कुर्यात् ॥ १७ ॥

पूर्वा माता शमीपलाशमिश्राँल्लाजा-
ञ्शूर्पे कृत्वा पश्चात् ॥ १८ ॥

उद्वाहवचनाद्वधूगृहं गत्वा विवाह इति वधूमातुः संनिधानात्सा पूर्वमेव लाजान्स्वयमुत्पाद्य शमीपलाशेन संस्पृष्टाञ्शमीपलाशमिश्रांस्तान्बर्हिषि शूर्पे निधाय तिष्ठति तदानीं शूर्पेणाऽऽदायाग्नेः पुरस्ताद्वधूमाता तिष्ठेत् । एवं सूत्रयोजना—लाजान्कृत्वा शूर्पे निहिताञ्शमीपलाशमिश्रानादाय पूर्वपूर्वदिक्संबन्धिनी वधूमाता तिष्ठेदिति ॥ १८ ॥

पश्चादग्नेर्दृषत्पुत्रमाक्रमयेद्वधूं दक्षिणेन
प्रपदेनेममश्मानमिति ॥ १९ ॥

पश्चादग्नेर्दृषत्पुत्रं सव्येन पाणिनाऽञ्जलिं गृह्णन्नेव दक्षिणेन पाणिनोरु गृहीत्वोत्क्षिप्याङ्गुलिमूलेन स्वयं मन्त्रमुक्त्वाऽऽक्रमयेत् । संनिधानात्सिद्धे दक्षिणेनेति प्रागुदीचीमुत्क्रमयेदित्यत्रापि दक्षिणनियमार्थम् ॥१९॥

सकृद्गृहीतमञ्जलिं लाजानां वध्व-
ञ्जलावावपेद्भ्राता ॥ २० ॥

वधूभ्राता । वध्वञ्जलाविति वध्वाः संनिधानात् । शमीपलाशमिश्राणामञ्जलिम् ॥ २० ॥

सुहृद्वा कश्चित् ॥ २१ ॥

भ्रातुरलाभे वध्वा हितैषी कश्चित्पुरुष आवपेत् । सुहृद्वेति सिद्धे कश्चिदिति पुरुषनियमार्थम् ॥ २१ ॥

तं सामौ जुहुयादविच्छिन्नयाञ्जलिमियं नारीति ॥ २२ ॥

प्रकृतत्वात्सिद्धे तमिति तमेव लाजाञ्जलिं जुहुयादुपस्तरणाभिघारणेन कुर्यादित्येवमर्थम् । अन्यथा हि होमद्रव्येऽदर्शनाच्छङ्का स्यात् । सेति सा वधूर्जुहुयादेव न मन्त्रं ब्रूयात्पतिरेव मन्त्रं ब्रूयादित्येवमर्थम् । अग्नाविति प्रभृतेऽग्नावित्येवमर्थम् । पाण्योरविच्छेदं कुर्वती वधूरङ्गुल्यग्रेण जुहुयात् । दृषत्पुत्राक्रमणाञ्जलिं गृह्णीयादेव पतिः ॥ २२ ॥

अर्यमणं पूषणमित्युत्तरयोः ॥ २३ ॥

उत्तरयोर्लाजहोमयोरिमौ मन्त्रौ ॥ २३ ॥

हुते तेनैव गत्वा प्रदक्षिणमग्निं परिणये-
त्कन्यला(का)पितृभ्य इति ॥ २४ ॥

इयं नारीति हुते येनैव प्रकारेण दक्षिणतो गतस्तेनैव प्रकारेण पाणिं गृह्णन्ननुपृष्ठमुत्तरतो गत्वा पाणिं गृह्णन्नेवाग्निं प्रदक्षिणीकुर्वन्वधूमनुगमयेत् । आज्यस्रुवद्दृषत्पुत्रशूर्पोदकुम्भानां प्रदक्षिणेऽन्तर्भावः । मातृब्रह्मोदकानां बहिर्भावः । पतिर्मन्त्रं ब्रूयात् ॥ २४ ॥

अवस्थानप्रभृत्येवं त्रिः ॥ २५ ॥

मध्यमया त्वार्यमणमिति लाजहोममन्त्र उत्तमया पूषणमिति । उत्तरतः समानम् ॥ २५ ॥

शूर्पेण शिष्टानग्नावोप्य प्रागुदीचीमु-
त्क्रमयेदेकमिष इति(?) ॥ २६ ॥

प्रकृतित्वाच्छिष्टेऽग्नाविरयमो यत्कृत्य तत्सर्वं तत्रैव समापनीयम् । प्रागुदीचीमुत्क्रमयेदित्यस्य च गमनोपक्रमत्वात् प्रत्यावृत्य समाप्तिरिति केचित् । तदयुक्तम् । अग्नाविरयनुक्तेऽप्यन्यत्राथ होमत्वाल्लाजप्रक्षेपप्रसङ्गादपरेणाग्निमोदक इति वचनादन्यदर्थमवश्यंभावितत्वाच्च प्रत्यागमनस्य वध्वाक्रमस्य द्योतितत्वात् । उत्क्रमणं दृषदुपाक्रमणवत्प्रतिमन्त्रं सप्त पदानि सखी सप्तपदीति वधूमीक्षन्नजपेन्मन्त्रलिङ्गात् ॥ २६ ॥

ईक्षकावेक्षणरथारोहणदुर्गानुमन्त्रणान्यभिरूपाभिः ॥ २७ ॥

वधूवदुमागताः सुमङ्गलीः स्त्रियो वीक्षन्सुमङ्गलीरिति जपेत् । सुकिंशुकमिति वधूं रथमारोहयेत् । अध्वनि भयस्थाने मा विदन्निति जपेत् । सुमङ्गलीरित्यस्यानागताभ्यां सह निर्देशस्तत्साम्यार्थः । यथा महत्यध्वनि रथारोहणबहुत्वे भयस्थानबहुत्वे च तयोरावृत्तिर्दृष्टार्थत्वात्तथाऽन्यापि रूयागमावा विवाहसमाप्तेरावृत्तिरिति । ईक्षकावेक्षणान्तरमाह—अपरेणाग्निमोदको गत्वा पाणिग्राहकं मूर्धन्यवसिञ्चेत । ब्रह्माग्न्योरन्तरेण गत्वा वधूं च समञ्जन्त्वित्यवसिक्तो जपेत् । पतिर्दक्षिणं पाणिं साङ्गुष्ठं गृह्णीयादभामित इति षड्भिः । उत्तरोत्तरेणोत्तरोत्तरमभिपीडनम् । अथ प्रदक्षिणमग्निं प्रत्यागम्योपरिष्टाद्धोमादिवामदेव्यगानान्तं कुर्याद्यथा दर्शपूर्णमासयोर्वक्ष्यते नात्रान्वारम्भः ॥ २७ ॥

इति रुद्रस्कन्दविरचितायां गृह्यवृत्तौ प्रथमपटलस्य
तृतीयः खण्डः ॥ ३ ॥

अथ चतुर्थः खण्डः ॥ ४ ॥

प्रागुदीचीमुद्वहेत् ॥ १ ॥

होमानन्तरमेव प्रागुदीचीं दिशं वधूमग्निं च प्रापयेत् ॥ १ ॥

पतिर्ब्राह्मणकुलेऽग्निमुपसमाधाय पश्चादग्नेर्लोहितं चर्माऽऽनडुहमुत्तरलोम प्राग्ग्रीवमास्तीर्य वाग्यतामुपवेशयेत् ॥ २ ॥

विवाहगृहे गृहान्तरे वा यदि क्षत्रियादिगृहे विवाहस्तदा त्वन्यस्मिन्नेव ब्राह्मणकुलेऽग्निमुपसंधानान्तं कृत्वा चर्मणि वधूमुपवेशयेत्पतिरस्तमनकाले। नात्र वध्वा दर्भासनं तत्कार्यकरणत्वाच्चर्मणः ॥ २ ॥

प्रोक्ते नक्षत्रेऽन्वारब्धायां स्रुवेणोपघातं जुहुयात्षड्भिर्लेखाप्रभृतिभिः संपातानवनयन्मूर्धनि वध्वाः ॥ ३ ॥

अन्येनोदितानि नक्षत्राणीत्युक्त एवोपर्याच्छादिते देशे होमः। प्रशब्दः प्रथमोद्यार्थः। परिसमूहनादीनि कृत्वा व्याहृतिभिः समस्तान्ताभिर्हुत्वा लेखादिभिः स्वाहाकारान्तैर्जुहुयात्। प्रकृतितः सिद्धेऽन्वारब्धायामित्यतः प्रकृतिसादृश्यार्थत्वादुपवेशनवत्पत्युरेवाऽऽलम्भप्रयोक्तृत्वार्थम्। इतरथा पित्रादेः स्यात्। स्रुवेणेति स्रुवेण संपातावनयनार्थम्। इतरथा हि दक्षिणेन पाणिना स्यात्। उपघातमिति प्रत्युपघातं व्याहृतिहोमेष्वपि संपातावनयनार्थम्। उपघातमित्याभीक्ष्ण्ये णमुल्। एतत्रयमपि न्यायसूचनपरमेव। तथा ह्याद्ये होमे न पितुस्त्वमन्वारब्धप्रयोक्तृत्वे कारणं किं तर्हि तस्याः पित्रधीनता। बाल्ये पितृवशे तिष्ठेदिति वचनात्पित्रधीनत्वम्। सा त्विदानीं भर्त्रधीना पाणिग्राहस्य यौवन इति वचनन्यायपरत्वात्। सूत्रस्य न्यायस्य च तुल्यत्वात्। चतुर्थीहोमेऽपि भर्तुरेव प्रयोक्तृत्वम्। उपनयनादिषु चाऽऽचार्यस्य च संपातानपि स्रुवगतत्वेन साधनान्तरप्रयुक्तिक्षयात्तेनैवावनयनम्। अत एव चतुर्थीहोमोऽपि तथैव। तथा दशानां होमानां संस्कारार्थत्वात्। संस्कारस्य संपातावनयनद्वारत्वाद्दशस्वप्यवनयनम्। अत एव चतुर्थीहोमेऽपि नवस्वाप्लवनद्वारत्वात्संस्कारस्य हुत्वा संपातावनयनम्। होमशिष्टसंपातप्रसिद्धेः ॥ ३ ॥

प्रदक्षिणमग्निं परिक्रम्य ध्रुवं दर्शयति ध्रुवा द्यौरिति ॥ ४ ॥

पत्युर्मन्त्रः ॥ ४ ॥

अभिवाद्य गुरूनगोत्रेण विसृजेद्वाचम् ॥ ५ ॥

काश्यपगोत्रोऽहममिवादयामीतिवत्स्वगोत्रमुक्त्वाऽभिवाद्य वधूर्वाङ्नियमं त्यजेत् । नावश्यं वदेत् । अथोपरिष्टाद्धोमादि वामदेव्यगानान्तं कुर्यात् ॥ ५ ॥

तत आह—

गौर्दक्षिणा ॥ ६ ॥

होमत्रयार्थमस्मिन्काले ब्रह्मणे देया । अत एव त्रिष्वपि होमेष्वेक एव ब्रह्मा ॥ ६ ॥

अत्रार्घ्यम् ॥ ७ ॥

अस्मिन्काले विवाहकर्त्रे तज्ज्ञातिभ्यश्च वध्वाः प्रदाताऽर्घं दद्यात् । तस्य विधिर्मन्त्रक्रमानुसारेण मधुपर्कं प्रतिग्रहीष्यन्नित्यारभ्य वक्ष्यते ॥ ७ ॥

आगतेष्वित्येके ॥ ८ ॥

यदा विवाहार्थं वध्वा गृहमागतास्तदेत्यर्थः ॥ ८ ॥

त्रिरात्रं क्षारलवणे दुग्धमिति वर्जयन्तौ
सह शय्यातां ब्रह्मचारिणौ ॥ ९ ॥

होमादूर्ध्वं नियमः । तद्दिनप्रभृति त्रिरात्रं दुग्धमुद्धृतसारपिण्याकादि सहैकस्यां शय्यायां रात्रीषु निवृत्तमैथुनौ परस्परमन्यतश्च । इतिशब्दोऽन्यस्यापि व्रतविरोधिनो वर्जनार्थः ॥ ९ ॥

हविष्यमन्नं परिजप्याऽन्नपाशेनेत्यसाविति वध्वा नाम ब्रूयात् ॥ १० ॥

*त्रिरात्रं भोजनकालेष्वाहृतमन्नं भोजनकालेष्वभिमृश्य जपित्वा॥१०॥*

भुक्तोच्छिष्टं वध्वै दद्यात् ॥

स चाग्नीथालेखाहोमं समाप्य वधूं सुकिंशुकमिति रथमारोप्याग्निं च गृहीत्वा प्रपस्थाने मा विदन्निति जपित्वा स्वगृहं प्रविश्येह गाव इति जपित्वा शय्यामुपविश्य वधूमीक्षमाण इह धृतिरिति जपेन्मन्त्रलिङ्गात् । तत्र त्रिरात्रं सह शयाताम् ॥ ११ ॥

तत आह—

ऊर्ध्वं त्रिरात्राच्चतसृभिराज्यं जुहुयादग्ने प्रायश्चित्ति-
रिति संमस्य पञ्चमीं संपातानवनयन्नुदपात्रे॥ १२ ॥

चतुर्थेऽहनि पूर्वाह्णे प्रपदान्तं कृत्वाऽन्वारब्धायां महाव्याहृतिभिः समस्ताभिर्हुत्वाऽग्ने प्रायश्चित्तिरित्येवमादिभिः स्वाहाकारान्तैर्हुत्वा मध संपातान् महदग्रहणमन्यथांऽपकर्षः । सहशयनस्य हविष्यमन्नमित्येतस्य प्रकृतत्वात्तद्यज्ञार्थमाज्यमित्युक्तम् । उदकपूर्णपात्रं आनाय पर्याप्तं स्यात् ॥ १२ ॥

तेनैनां सकेशनखामाप्लावयेत् ॥ १३ ॥

सहशिरस्कं पतिः स्वयमेव स्नापयेत्ततो वामदेव्यगानान्तं कृत्वा ब्रह्माणं भोजयेत्॥ १३ ॥

ततो यथार्थं स्यात् ॥ १४ ॥

न प्रतिहोमं साध्यमेवायत्तं यथार्थं किं त्वेकया साध्यमेवेदं होमत्रया-त्मकमनुष्ठानमित्येयमर्थम् ॥ १४ ॥

ऋतुकाले दक्षिणेन पाणिनोपस्थमालभेद्वि-
ष्णुर्योनिं कल्पयत्विति समासायाम् ॥ १५ ॥

वायादिरग्निरित्यस्यापि पक्षस्याभ्युपगमं दर्शयितुमौपासनहोममनु-क्त्वेवमुक्तम् । रजोदर्शनप्रभृतिषोडशरात्रमृतुकालः । यदि राज्यास्तृ-तीये भागे रजः स्यात्तदोत्तरमेवाहर्विद्यात् । चतुर्थे भाग इति केचित् । समासायामिति । सम्यगवस्थायां वध्वामित्यर्थः । का साऽवस्था ।

तासामाद्याश्चतस्रस्तु निन्द्या एकादशीति च ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।

एवमादिसूचिता ॥ १५ ॥

संभवेद्गर्भं धेहीति ॥ १६ ॥

सम्यगालोच्य मुहूर्तादि मिथुनी भवेत् ॥ १६ ॥

इति रुद्रस्कन्दीयगृह्यवृत्तौ प्रथमपटलस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमः खण्डः ।

यस्मिन्नग्नौ पाणिं गृह्णीयात्स गृह्यः ॥ १ ॥

पाणिं गृह्णीयादिति विवाहकरणं लक्ष्यते । व्यवहारार्था हि संज्ञा । एवं चेद्विवाहादनु निष्पादितत्वाद्गृह्यस्य विवाहावस्थायां गृह्यत्वाभावाद्गृह्या न स्यान्न गोदक्षिणेति लिङ्गात् ॥ १ ॥

यस्मिन्वाऽन्त्यां समिधमादध्यात् ॥ २ ॥

यस्मिन्नेवाग्नौ ब्रह्मचार्यन्त्यां समिधमादध्यात्स गृह्यः । अस्मिन्पक्षे तत्प्रभृति सायंप्रातर्होमादीनि स्युः । गृह्य एव विवाहः ॥ २ ॥

निर्मन्थ्यो वा पुण्यः सोऽनर्धुकः ॥ ३ ॥

उक्तस्यैव प्रकारद्वयस्योत्पत्तिनियमो वाऽयं न गृह्यान्तरे । वाशब्दः शाखान्तरोक्तस्यापि श्रोत्रियागारादेः संग्रहणार्थः । पुण्यः परलोकहितकरः । अनर्धुक इह जन्मन्यृद्धिभावकरः ॥ ३ ॥

अम्बरीषाद्वाऽऽनयेत् ॥ ४ ॥

अपूपविक्रियार्थोऽग्निरेवं ॥ ४ ॥

बहुयाजिनो वाऽगाराच्छूद्रवर्जम् ॥ ५ ॥

बहुदेवपूजकस्य बहुयाजिगृहादानयेदग्निं विवाहं कर्तुमन्त्यां समिधं वाऽऽधातुम् ॥ ५ ॥

सायमाहुत्युपक्रमं परिचरणम् ॥ ६ ॥

चतुर्थीहोमानन्तरं यः सायंकालस्तमारभ्याऽऽजीवसमाप्तेराश्रमपरिसमाप्तेराधानकालाद्वा परिचरणमनुष्ठानं कुर्यात् । परीत्यधिकारेऽयं सूचितम् । अतोऽनन्तरं ब्राह्मणभोजनम् । अन्त्यां समिधं दद्यादित्यपर्यायेऽपि पक्षद्वयर्योः सायमाहुत्युपक्रममेव ॥ ६ ॥

प्रागस्तमयोदयाभ्यां प्रादुष्कृत्य ॥ ७ ॥

अस्तमयोदयात्प्राक्समीपकाले प्रज्वाल्य ॥ ७ ॥

अस्तमिते होमः ॥ ८ ॥

अस्तमयानन्तरमेव होमः ॥ ८ ॥

उदिते चानुदिते वा ॥ ९ ॥

संध्यायामेव ॥ ९ ॥

हविष्यस्याकृतं चेत्प्रक्षाल्य जुहुयात्पाणिना ॥ १० ॥

हविष्यस्य माषवरककोद्रवादिव्यतिरिक्तस्य लवणाद्यसंयुक्तस्य येषु केषुचिद्धोमेषु साधनतयाऽऽश्रितस्यौदनस्य षष्ठीनिर्देशात्तदेकदेशस्य साधनतयोपादानं न पक्वावस्थस्य कृत्स्नस्योपादानम् । अतः पाकधर्मा न स्युः । इतरथा शङ्का स्याद्दर्शपूर्णमासादौ दर्शनात् । अकृतपाकानुक्तजातीयानेव तण्डुलांस्त्रिः प्रक्षाल्याङ्गुष्ठपर्वमात्रप्रमाणामाहुतिम् । होमसामान्यात्स्रुवस्य प्राप्तौ पाणेर्विधानम् ॥ १० ॥

दधि चेत्पयो वा कंसेनेति चेदिति ॥ ११ ॥

सिद्धवद्व्यपदेशः शाखान्तरविहितस्यापि द्रव्यस्य संग्रहणार्थः । अत आज्यमपि द्रव्यम् । पृथग्ग्रहणमितरेतरसंयोगव्युदासार्थम् ॥ ११ ॥

चरुस्थाल्यां वा ॥ १२ ॥

कंसेन विकल्पः ॥ १२ ॥

अग्नये स्वाहेति मध्ये ॥ १३ ॥

अग्निमध्ये ॥ १३ ॥

तूष्णीं प्रागुदीचीमुत्तराम् ॥ १४ ॥

मन्त्रमनुच्चरन्नग्नावेव प्रागुदीच्यां दिशि द्वितीयां जुहुयात् । सायंप्रातर्होमस्य साध्यत्वाद्यया कयाचिदसौ तूष्णींधर्मस्य प्रजापतावसाधारण्यात्प्रजापतये स्वाहेति मनसा स्मरञ्जुहुयात् । तस्मात्प्राजापत्यां मनसा जुह्वतीति श्रुतेस्तूष्णींधर्मत्वं प्रजापतेः । याः प्रागुदीच्याहुतिर्दर्शपूर्णमासयोरग्नये स्विष्टकृते इति तामत्र जुहुयादिति केचित् । तदयुक्तम् । वक्ष्यमाणस्य सिद्धवद्व्यपदेशायोगादसाधारणशब्दाभावाच्च । पश्चाद्विधानादेवोत्तरत्वे सिद्ध उत्तरामिति यत्र यत्रैकाहुतिश्चोद्यते तत्र तत्रैव पूर्वोत्तरा स्यादित्येवमर्थम् ॥ १४ ॥

सूर्यायेति प्रातः पूर्वा ॥ १५ ॥

सूर्याय स्वाहेत्यग्निमध्ये ॥ १५ ॥

नात्र परिसमूहनादीनि पर्युक्षणवर्जम् ॥ १६ ॥

बहुवचनमुपरिष्टाद्धोमानां समिदाधानादेश्च निवृत्त्यर्थम् । समन्तात्परिषेचनं पुरस्तादुपरिष्टाच्च पर्युक्षणवर्जमुत्तराहुत्यनन्तरमुभयत्र समिधमादध्यादित्युपदेशः पूर्वाहुतेः पूर्वमिति केचित् ॥ १६ ॥

पत्नी जुहुयादित्येके ॥ १७ ॥

गृह्याः पत्नी गृह्योऽग्निरेष इति सिद्धे सायंप्रात-
र्भूतमित्युक्त ओमित्युच्चैर्ब्रूयात् ॥ १८ ॥

भोजनार्थमोदने सिद्धे भोजनस्य कालस्य परतन्त्रत्वान्न पूर्वाह्णनियमः । कालोपलक्षणत्वाच्चासत्यपि भोजनार्थे पाके पाकं कृत्वा भवत्येव तस्मिन्काले होमः । सायंप्रातरिति रात्रावहनि चेत्यर्थः । प्रकृतितः सिद्धे वचनं परिचरणतन्त्रेषु कालप्राप्तिर्नास्तीति द्योतनार्थम् । पचनकर्तारं भूतमित्युक्ते गृहपतिरोमिति ब्रूयात् ॥ १८ ॥

मा क्षा नमस्त इत्युपांशु ॥ १९ ॥

ब्रूयादित्यनुवर्तते ॥ १९ ॥

हविष्यस्यान्नस्य जुहुयात्प्राजा-
पत्यं सौविष्टकृतं च ॥ २० ॥

प्रजापतये स्वाहेति मनसाऽग्निमध्ये परिचरणतन्त्रेण । प्रकृतितः सिद्धे हविष्यस्येति हविष्यभोजने भोज्यसंस्कारप्रयुक्तभ्रान्त्या तेनापि होम आशङ्क्येतेति तन्निवृत्त्यर्थम् । अन्नस्येति तण्डुलादिनिवृत्त्यर्थम् । प्राजापत्यं सौविष्टकृतं च प्रजापतये स्वाहेति मनसाऽग्निमध्येऽग्नये स्विष्टकृते स्वाहेति प्रागुदीच्यां जुहुयात् ॥ २० ॥

बलिं नयेद्बहिरन्तर्वा चतुर्निधाय ॥ २१ ॥

वक्ष्यमाणेषु देशेषु निदध्यात् । गृह एव गर्भगृहाद्बहिरन्तर्गृहे वा चतुरितिग्रहणाद्बलिचतुष्टयार्थमादावन्ते च सकृदेव परिषेचनम् । प्रत्येकमिति केचित् ॥ २१ ॥

मणिकदेशे ॥ २२ ॥

उदकधारणसमीपे ॥ २२ ॥

मध्ये ॥ २३ ॥

गर्भगृहस्य मध्ये ॥ २३ ॥

द्वारि ॥ २४ ॥

गर्भगृहस्यैव ॥ २४ ॥

शय्यामनु ॥ २५ ॥

शयनसमीपे ॥ २५ ॥

वर्चं वा ॥ २६ ॥

अवस्करसमीपे । पुरीषोऽवस्करः । वाशब्दो विनिवेशार्थः । कथम् । शय्यामनु नक्तं वर्चमनु दिवा देशौचित्याद्देवतौचित्याच्च ॥ २६ ॥

अथ स्तूपम् ॥ २७ ॥

अन्विति वर्तते । अथेति वक्ष्यमाणानां सर्वेषां बलीनामेष एव देश इत्यर्थः । प्रथमस्थापितस्थूणः स स्तूपस्तत्समीपे तमनु समीपदेशे ॥ २७ ॥

एकैकमुभयतः परिषिञ्चेत् ॥ २८ ॥

आदौ बलेरमावास्यपरिषेकशब्दानन्वयादमितः सेचनमात्रसिक्ते बलिं निधाय प्रागुपक्रमं प्रदक्षिणं परिषिञ्चेत् ॥ २८ ॥

शेषमद्भिः सार्धं दक्षिणां निनयेत् ॥ २९ ॥

बलिस्थाल्यां शिष्टमन्नमद्भिः सह स्तूपस्य दक्षिणतः प्राचीनावीती पितृदेवेन तीर्थेन निनयेत् ॥ २९ ॥

फलीकरणानामयमाचामस्वेति विश्राणिते ॥ ३० ॥

फलीकरणमुदकमोदनावस्रसनं च मिश्रीकृत्य विगतश्रमेऽतिथावयं ब्राह्मणाय दद्देयस्यानन्तरमित्यर्थः । तस्य स्तूपस्य प्रागुदीच्यां दिशि रौद्रत्वात् ॥ ३० ॥

पृथिवी वायुः प्रजापतिर्विश्वे देवा आप ओषधि-
वनस्पति(त)य आकाशः कामो मन्युर्वा रक्षो-
गणः पितरो रुद्र इति बलिदेवतानि ॥ ३१ ॥

उक्तानां बलीनां यथासंख्यमेता देवताः कामो मन्युर्वेति पूर्ववद्विनिवेशः ॥ ३१ ॥

तूष्णीं तु कुर्यात् ॥ ३२ ॥

तुशब्दोऽवधारणार्थः । बलिदेवतान्येव । तूष्णींहोम इति होमेऽपि प्राजापत्यं मनसैव 'तस्मात्प्राजापत्यं मनसा जुहोति' इति श्रुतः ।

कुर्यादिति मनोऽव्यापारमात्रार्थम् । पृथिव्यै वायवे प्रजापतये विश्वेभ्यो देवेभ्य ओषधिवनस्पतिभ्य आकाशाय कामाय मन्यवे रक्षोगणेभ्यः पितृभ्यो रुद्रायेति चतुर्थ्यन्तं मनसा स्मरन्बलिं निदध्यात् ॥ ३२ ॥

सर्वस्य त्वन्नस्यैतत्कुर्यात् ॥ ३३ ॥

सर्वस्येति शाकमांसादिपरिग्रहणार्थमितरथौदनस्यैव स्यात् । प्रकृतात्मौपासनहोमे दर्शनात् । अन्नस्येति । अदनीयस्य । तुशब्द एवकारार्थे । भोजनार्थस्यैव दर्शपूर्णमासादिचरोः कृसरः स्थालीपाक इत्यादयश्चेत्यर्थः । एतदिति सकलवैश्वदेवकर्मपरामर्शार्थं । इतरथा हि प्रकृतत्वाद्बलीनामेव विशेषः स्यात् । कुर्यादित्यनग्नेरपि लौकिकेऽग्नौ करणार्थम् ॥ ३३ ॥

असकृदेकस्मिन्काले सिद्धे सकृदेव कुर्यात् ॥ ३४ ॥

रात्रावहनि यदि पाकावृत्तिः स्यादेकदैव कुर्यात् ॥ ३४ ॥

बहुधा चेद्गृहपतेः ॥ ३५ ॥

युगपत्क्रमेण वा यदि बहवः पाकाः स्युस्तदा यद्गृहपतेर्भोजनार्थं तस्यैव कुर्यात् । यदा गृहपतेरपि बहवः पाकास्तदाऽप्येकस्यैव ॥ ३५ ॥

सर्वस्य त्वन्नस्याग्नौ कृत्वाऽग्रं ब्राह्मणाय दद्यात्स्व(त्वा स्व)यं कुर्यात् ॥ ३६ ॥

सर्वस्येत्यहविष्यस्यापि परिग्रहणार्थम् । अन्नस्येति पक्वोपलक्षणार्थमपक्वान्ननिवृत्तये । अग्नाविति लौकिकाग्न्यर्थम् । तुशब्दो विशेषणार्थः । न पूर्ववदेकस्यैव किंतु सर्वेषामेव पक्वान्नानां किंचित्किंचिद्गृहीत्वैकीकृत्य तूष्णीं लौकिकाग्नौ द्वे आहुती निदध्यादित्यर्थः । भोज्यसंस्कारार्थमेतत् । अग्रं ब्राह्मणाय दत्त्वा स्वयं कुर्यात् । अग्रं प्रथमं ब्राह्मणाय ततो वर्णान्तरेभ्यो यथाक्रमेण । उपलक्ष[ण]त्वादतिवर्णमपि श्रेयसे पूर्वं दद्यात् । अयं चार्थः—सर्वान्वैश्वदेवभागिनः कुर्वीतेत्येवमादीनि वाक्यान्यालोच्य न्याय उक्तः । अवश्यं कार्यमेतद्दानं पक्वस्य यथासंभवं मत्वा नात्र विरोधेन । चतुर्थ्यैव सिद्धे दत्त्वेति यथासंभवमात्रे निवृत्ते स्वभोजनाभ्यनुज्ञानार्थं नावश्यं तेषां भोजनपरिसमाप्तिः प्रतीक्षणीयेति । दत्त्वेति समानकर्तृकत्वं स्वभोजने नित्यसंबन्धार्थमसति स्वभोजने नावश्यं कार्यमेतद्दानमिति । असत्यपि स्वभो-

जने सर्वकालसाधारण्येन येभ्योऽवश्यं दानमुक्तं सांतानिकं वक्ष्यमाण- मित्यादिना तेभ्यो दद्यादेव । स्वयंग्रहणमात्मन एव नान्तर्यानियमेन संभृत्यस्येति भृत्यानां स्वागतैः सहापि भोजनम् । तथा भार्याया अपि गर्भिण्या रोगिण्याश्च । स्वस्थायास्तु स्वभोजनानन्तरमेव । भुञ्जीतेति यावच्छेषापत्तिसिद्धे कुर्यादिति वचनं सत्कारमपि तेषां कुर्यादित्येवमर्थम्। स्मृत्याचारसिद्धस्य सूचनमात्रमेतत्सूत्रम् ॥ ३६ ॥

व्रीहिप्रभृत्यायवेभ्यो यवेभ्यो वाऽऽ व्रीहि-
भ्यः स्वयं हरेत्स्वयं हरेत् ॥ ३७ ॥

सायंप्रातर्होमवर्जं स्वयं होत्रमिति कर्तृरनियमे प्राप्ते व्रीहिसंपत्ति- प्रभृति यवसंपत्तिप्रभृति वा षट्सु मासेषु स्वयंकर्तृत्वं नियम्यते । हरेदिति सहोमस्य बलेरुपलक्षणार्थम् । द्विरुक्तिः पटलसमाप्तिद्योतिका ॥ ३७ ॥

इति श्रीरुद्रस्कन्दविरचितायां गृह्यवृत्तौ प्रथमपटलस्य
पञ्चमः खण्डः ॥ ५ ॥

---

पटलश्च समाप्तः ।

अथ द्वितीयः पटलः ।

---

पौर्णमासोपक्रमौ दर्शपूर्णमासौ ॥ १ ॥

नित्यप्रकरणविधानादधिकारानुक्तेश्च सायंप्रातर्होमवन्नित्यावेतौ । तद्वदेवाधिकारित्वं च यावज्जीवं यावदाश्रमं यावदाधानम् । अतोऽ- नन्तरं ब्राह्मणभोजनम् । सूर्याचन्द्रमसौ यस्मिन्क्षणे संभवतः स दर्शो यस्मिन्क्षणे चन्द्रमाः पूर्यते स पूर्णमासस्तत्कालसंबन्धौ प्रयोगौ दर्श- पूर्णमासाविति लक्ष्येते । न चैकस्मिन्क्षणे किं त्वपराह्ण उपक्रम्यानन्तरे पूर्वाह्णे समाप्तिर्युक्तेति । तस्मान्मध्यंदिनादूर्ध्वमागामिमध्यंदिनाच्च पूर्व- मसौ क्षणोऽस्ति असौ कालो लक्ष्यते । अत एव तत्कालवर्तिनौ प्रयोगौ कुर्यादित्यर्थः । वक्ष्यमाणसूत्रद्वयेनैव सिद्धे पौर्णमासोपक्रमाविति मध्ये मरणशङ्कायामपि दर्शनियमार्थमुपक्रमस्योपसंहारापेक्षत्वात् । एवं साय- माहुत्युपक्रममित्यत्रापि द्रष्टव्यम् । समाप्तिप्रकार उक्तो निद्राभे तदृग्य- परपक्ष इत्यारभ्य मृतेऽप्येवमेव समाप्य संस्कर्ता संस्कुर्यात् ॥ १ ॥

दार्शं चेत्पूर्वमुपपद्येत पौर्णमासेनेष्ट्वाऽथ तत्कुर्यात् ॥ २ ॥

चतुर्थीहोमानन्तरं यदि दर्शः पूर्वमागतश्चेत्तदा दर्शकालात्पूर्वमेव पौर्णमासं कृत्वा स्वकाले कुर्यात् ॥ २ ॥

अकुर्वन्पौर्णमासीमाकाङ्क्षेदित्येके ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

अपराह्णे स्नात्वौपवसथिकं दंपती भुञ्जीयाताम् ॥ ४ ॥

स्नानमपि मध्यंदिनादूर्ध्वमेव कर्माङ्गम् । तद्यजनीयात्पूर्वमहरुपवसथस्तदहर्योग्यं यच्छास्त्रान्तरे दृष्टमशनीयं तदौपवसथिकम् । तदुक्तं मापमांसमाज्येनाश्नीयादिति ॥ ४ ॥

मानदन्तव्य उवाच श्रेयसीं प्रजां विन्दते ॥ ५ ॥

मानदन्तव्य ऋषिर्विन्दते लभते ॥ ५ ॥

काम्यो भवत्यक्षोधुको य औपवसथिकं भुङ्क्ते ॥ ६ ॥

काम्यः प्रियदर्शनः । अक्षोधुकः क्षुत्पिपासारहितः ॥ ६ ॥

तस्माद्यत्कामयेत तद्भुञ्जीत ॥ ७ ॥

यदिच्छेत्प्रजादीनां तदौपवसथिकं भुञ्जीत नित्यादेवाऽऽनुषङ्गिकफलं स्तुतिमात्रं वा । रात्रौ न भोजनमपराह्णग्रहणस्य सर्वाहर्नियमार्थत्वात् । यतो रागप्राप्तस्यायं नियमोऽत उपवासेऽपि न वैगुण्यम् ॥ ७ ॥

नाव्रत्यमाचरेत् ॥ ८ ॥

व्रतविरोधि मधुमांसभक्षणादि न कुर्यादा प्रयोगसमाप्तेः ॥ ८ ॥

प्रातराहुती हुत्वा ॥ ९ ॥

दर्शपूर्णमासौ कर्तव्याविति शेषः । अनयोः पूर्वेद्युरुपक्रान्तत्वात् । प्रातराहुतेश्च सर्वमहः प्रातराहुतेः स्थानमित्यस्तमयात्कालाभ्यनुज्ञानात्प्रातराहुतिः पश्चात्स्यादिति तन्निवृत्तये पूर्ववन्नियम्यते ॥ ९ ॥

हविर्निर्वपेदमुष्मै त्वा जुष्टमिति देवताश्रयं सकृद्यजुषा द्विस्तूष्णीमिति ॥ १० ॥

यद्धविः शास्त्रान्तरे प्रतिज्ञातं व्रीहितण्डुला यवतण्डुला वा तत् पाणिना गृहीत्वा मुष्टिपूर्णमग्नये त्वा जुष्टं निर्वपामीति निर्वापवद्यथादेवतं चरुस्थाल्यां सकृद्द्विरपेद्द्विरमन्त्रकम् । ब्रह्मोपवेशनान्तं कृत्वा निर्वापः । अस्यापि ब्रह्मापेक्षत्वात् ॥ १० ॥

त्रिर्देवेभ्यः प्रक्षालयेत् ॥ ११ ॥

उदकेन प्रक्षालनम् । प्रकृतत्वात्सिद्धे देवेभ्य इत्यन्यत्रापि यद्देवेभ्यः प्रक्षालनं तत्त्रिरेवेत्येवमर्थं यथौपासनहोमे ॥ ११ ॥

अथ प्रक्षालनप्रसङ्गादुच्यते—

द्विर्मनुष्येभ्यः ॥ १२ ॥

भोजनार्थे पाके द्विः प्रक्षालनम् । असत्यपि पाके यत्र प्रक्षालनं विहितं तत्रापि द्विरेव ॥ १२ ॥

सकृत्पितृभ्यः ॥ १३ ॥

श्राद्धार्थेऽन्वष्टक्यादौ वाऽसत्यपि पाके पूर्ववत् ॥ १३ ॥

अथ प्रकृतमाह—

मेक्षणेन प्रदक्षिणमुदायुवं श्रपयेत् ॥ १४ ॥

मेक्षणं दर्वी । यथा यन्नि(न्नी)वेपमुदकस्य वा बहिर्गमनं न भवे-त्तथोदायुवं श्रपयेत् । यदि बहिर्गच्छेद्यद्योगेजस इत्यप आसिञ्चेत् । तद्यज्ञ उल्बणं क्रियते तदप उपनिनयेद्ययोरोजस इति श्रुतेः । अस्मि-न्काले परिस्तरणमाज्यसंस्कारं च[ग्ध] संस्कारापेक्षत्वाच्छृतमभिघा-रस्य ॥ १४ ॥

तत आह—

शृतमभिघार्योद्गुद्वास्य प्रत्यभिघारयेत् ॥ १५ ॥

स्रुवेणाऽऽज्येनाभिघारणम् ॥ १५ ॥

सर्वाण्येवं हवींषीति ॥ १६ ॥

सर्वाणीति व्याप्त्यर्थमेवं निर्वापादि हवींषीति भोजनार्थं श्राद्धार्थं कृसरस्थालीपाक इत्यादौ च निवृत्त्यर्थम् । निहितेषु पाकावस्थायामह-विष्ट्वं देवतोद्देशाभावात् । औपासनवैश्वदेवहोमयोरप्येकदेशस्यैव देव-तोद्देशेनोपादानं तस्येति षष्ठीनिर्देशात् । अतस्तयोरपि पाकावस्थायां न हविष्ट्वम् ॥ १६ ॥

बर्हिषि साय(या) ॥ १७ ॥

साद्यानीत्यर्थः । छान्दसः शेर्लुक् । बहुवचनात्सर्वाण्येव होमाङ्गानि साद्यानि, आज्यं चरुस्रुवौ जुहूरिध्ममिति । बर्हिषीति सिद्धवन्निर्देशात्स्त-रणावस्थायामेव तथा स्तरणं यथा तत्राऽऽसादनं संभवेत् । इतरेतरयो-

गाच्च हविःसदनावस्थायामेवोत्तरतः सर्वेषां सादनम् । बहुवचनाच्च स्रुक्तोऽस्य बहुविषयत्वं गमयितुम् । अतो विवाहादिष्वपि होमाङ्गानामेव सादनम् । औपासनादिषु दर्भाभावादुत्तरतोभूमावेव सादनं प्राक्पर्युक्षणात् । एवं प्रयोगक्रमः—प्रातराहुतिं हुत्वा ब्रह्मोपवेशनान्तं कृत्वा चरुं श्रपयित्वा परिस्तीर्य दर्भेषूपविश्याऽऽज्यं संस्कृत्याभिघार्योत्तरतः सर्वाणि सादयित्वा परिषेचनादिप्रपदान्तं कुर्यात् ॥ १७ ॥

तत्र आह—

महाव्याहृतिभिर्हुत्वाऽऽज्यभागौ जुहुयाच्चतुर्गृहीतमाज्यं गृहीत्वा पश्चावत्तं भृगूणां जामदग्न्यानामग्नये स्वाहेत्युत्तरतः सोमायेति दक्षिणतः ॥ १८ ॥

आज्यभागाविति संज्ञा व्यवहारार्था । स्रुवेणाऽऽदाय जुह्वामासिच्य जुह्वैव चतुर्गृहीतं जुहुयात् । स्रुवेण स्रुच्याज्यं गृह्णीयादिति परिभाषादर्शनात्, गृह्यान्तरदर्शनात्, स्रुवजुह्वोः प्राप्तिः । स्रुवस्य तु विवाहप्रकृतित्वादपि प्राप्तिरस्त्येव । गृहीत्वेति प्रत्येकं चतुर्ग्रहणार्थं पौनःपुन्ये [प]कृत्वास्मरणात् ॥ १८ ॥

विपरीतमितरे ॥ १९ ॥

सोमाय स्वाहेति दक्षिणतो हुत्वाऽग्नये स्वाहेत्युत्तरत इत्यन्य आचार्या आहुः ॥ १९ ॥

आज्यमुपस्तीर्य हविष्यवद्येन्मेक्षणेन मध्यात्पुरस्तादिति॥ २० ॥

स्रुवेण जुह्वामुपस्तीर्य हविषोऽङ्गुष्ठपर्वमात्रमवखण्ड्य हस्तेन जुह्वां निदध्यात् । इतिशब्दः पक्षसमाप्त्यर्थः ॥ २० ॥

पश्चाच्च पञ्चावत्ती ॥ २१ ॥

भृगुजामदग्न्यः ॥ २१ ॥

अभिघार्य प्रत्यनक्त्यवदानस्थानानि ॥ २२ ॥

स्रुवेण जुहूस्थं हविरभिघार्याऽऽज्येनावदानस्थानानि यथाक्रममनक्त्याज्येन ॥ २२ ॥

न स्विष्टकृतः ॥ २३ ॥

स्विष्टकृतोऽवदायावदानस्थाने न प्रत्य[ न ]क्ति । प्रत्यञ्जनप्रतिषेधादेवेदं सर्वं स्विष्टकृत्यपि तुल्यमिति गम्यते ॥ २३ ॥

अग्नुष्मै स्वाहेति जुहुयाद्यद्देवत्यं स्यात् ॥ २४ ॥

अग्नये स्वाहेतिवद्यथावद्देवतमग्निमध्ये जुह्वां जुहुयात् । एतत्प्रधानम् । अत एव व्यतिरिक्तं सर्वं चरुतन्त्रेषु प्रवर्तते ॥ २४ ॥

स्विष्टकृतः सकृदुपस्तीर्य द्विर्भृगूणां सकृद्धविषो द्विरभिघार्याग्नये स्विष्टकृते स्वाहेति प्रागुदीच्यां जुहुयात् ॥ २५ ॥

शोभनमिष्टं द्रव्यप्रतिपत्तिद्वारेण करोतीति स्विष्टकृद्यागः । अतोऽप्रधानमिदम् । सकृदुपस्तीर्येत्यनूद्यते । भृगूणां जामदग्न्यानां द्विरुपस्तरणविशेषं विधातुं मध्यात्पुरस्तात्पश्चात्पुरस्तात्पश्चादित्येतेषां प्रत्याम्नायः ॥ २५ ॥

सकृद्धविष इति ॥ २६ ॥

उत्तरार्धादवदानम् । उत्तरार्धात्स्विष्टकृत इति श्रुतेः । गृह्यान्तरविधानाच्च । द्विरभिघार्येति सकृत्त्वप्रत्याम्नायः । प्रागुदीच्यामिति मध्यप्रत्याम्नायः ॥ २६ ॥

अथोपरिष्टाद्धोमादि ॥ २७ ॥

आज्येन व्याहृतिभिश्चतसृभिः प्राजापत्यया वा ॥ २७ ॥

तत आह—

समिधमाधाय ॥ २८ ॥

परिषिञ्चेदित्यध्याहारः । समिधमाधायानु पर्युक्ष्येति गौतमीयानुवादात् । पूर्वं निहितां समिधमग्नावाधायादितेऽन्वमंस्थाः सरस्वतेऽन्वमंस्था देवसवितः प्रासावीरिति पूर्ववत्परिषिञ्चेद । गृह्यान्तरान्मन्त्रप्राप्तिः ॥ २८ ॥

दर्भानाज्ये हविषि वा त्रिरवदायाग्रमध्यमूलान्यक्तं रिहाणा व्यन्तु वय इत्यभ्युक्ष्याग्नावनुप्रहरेत् । यः

पशूनामधिपती रुद्रस्तन्तुचरो वृषा पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहेति ॥ २९ ॥

प्रतिपत्तिकर्मेदं दर्भानिति द्वितीयानिर्देशात्। अत एव स्तुतान्सर्वदर्भान्सिक्त आज्ये हविषि वा सकृन्मन्त्रमुक्त्वाऽग्राणि मध्यानि मूलानि क्रमेण संमृज्य पुनश्चैवं द्विः संमृज्याद्भिरभ्युक्ष्याग्रपूर्वं प्रक्षिपेत् ॥ २९ ॥

तद्यज्ञवास्तु ॥ ३० ॥

तत्पूर्वसूत्रोक्तं कर्म । यज्ञवास्तुसंज्ञा व्यवहारार्था ॥ ३० ॥

सर्वत्र कुर्यात् ॥ ३१ ॥

समिधाधानादि समिद्धवत्सु कर्मसु सर्वत्र कुर्यात् । अध्याहारात्सिद्धे कुर्यादिति वामदेव्यगानार्थम् ॥ ३१ ॥

हविरुच्छिष्टमुदगुद्वास्य ब्रह्मणे दद्यात् ॥ ३२ ॥

हविर्ग्रहणमाज्यव्युदासार्थम् । उच्छिष्ट इति स्वयं किंचित्प्राश्यावशिष्टस्य दानार्थम् । पूर्वमेवोदग्देशस्थिते सिद्ध उदग्ग्रहणमुदग्देशात्स्थास्या सहोद्वासनार्थम्। अन्यथा हि स्थाल्यामोदनस्योद्वासनमाशङ्कयेत । चतुर्थ्यैव सिद्धे दद्यादिति स्वयं ब्रह्मत्वेऽप्यन्यस्मै दानार्थम् ॥ ३२ ॥

पूर्णपात्रं दक्षिणा ॥ ३३ ॥

ओदनेन तण्डुलैर्वा तदलाभे फलैर्वा पूर्णपात्रं ब्रह्मणे दक्षिणार्थं दद्यात्तूष्णीमोमिति वा प्रतिगृह्णीयात् ॥ ३३ ॥

यथोत्साहं वा ॥ ३४ ॥

यथा महोत्साही भवति तथा दद्यात् । तदभिलषितं दद्यादित्यर्थः ॥ आज्यतन्त्रेष्वपि यथोत्साहमेव दक्षिणा ॥ ३४ ॥

इति श्रीरुद्रस्कन्दकृतायां गृह्यवृत्तौ द्वितीयपटलस्य प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयः खण्डः ।

---

प्रकृतस्य प्रधानदेवता आह—

आग्नेयः स्थालीपाकोऽनाहिताग्नेर्दर्शपूर्णमासयोः ॥ १ ॥

अनाहिताग्नेर्दर्शपूर्णमासयोराग्नेय एव स्थालीपाकः । अग्नये त्वा जुष्टं निर्वपामीति निर्वापः । अग्नये स्वाहेति होमः ॥ १ ॥

अग्नीषोमीयः पौर्णमास्यामाहिताग्नेः ॥ २ ॥

अग्नीषोमाभ्यां त्वा जुष्टं निर्वपामीति निर्वापः । अग्नीषोमाभ्यां स्वाहेति होमः ॥ २ ॥

ऐन्द्रो माहेन्द्रो वैन्द्राग्नो वाऽमावास्यायाम् ॥ ३ ॥

आहिताग्नेरेवेष्टिवद्विनिवेशः । इन्द्राय त्वा जुष्टं निर्वपामि । महेन्द्राय त्वा जुष्टं निर्वपामि । इन्द्राग्निभ्यां त्वा जुष्टं निर्वपामीति निर्वापः । इन्द्राय स्वाहा महेन्द्राय स्वाहेन्द्राग्निभ्यां स्वाहेति होमः ॥ ३ ॥

यथा वाऽनाहिताग्नेः ॥ ४ ॥

दर्शे च पूर्णमासे चानाहिताग्नेर्यथा वा तथेत्यर्थः ॥ ४ ॥

सर्वमहः प्रातराहुतेः स्थानम् ॥ ५ ॥

सर्वमिति पूर्वाह्णासंभवेऽपराह्णेऽपि होमार्थम् ॥ ५ ॥

रात्रिः सायमाहुतेः ॥ ६ ॥

स्पष्टम् ॥ ६ ॥

सर्वोऽपरपक्षः पूर्णमासस्य ॥ ७ ॥

सर्व इत्युपक्रान्तस्य पूर्वाह्णातिक्रमेऽपराह्णे समाप्त्यर्थम् । तदतिक्रमेऽपि रात्रावनुपक्रान्तस्य तु स्वकालेऽपराह्णे आत्वेत्याद्यहरन्तेऽपि भवत्येव ॥ ७ ॥

पूर्वपक्षो दार्शस्य ॥ ८ ॥

सर्व इति वर्तते । आपत्काल एते । अन्यथाऽस्तमिते होम इत्यादेर्वैयर्थ्यप्रसङ्गात् । उत्तरहोमोपक्रमकालात्प्रागेवैते कालाः । आपत्कालत्वाच्च यथासंभवं न कालोत्कर्षः कार्यः ॥ ८ ॥

अभोजनेन संतनुयादित्येके ॥ ९ ॥

स्वकालात्ययेऽभोजनेन तत्कार्यसिद्धिरित्यन्ये । आ स्वकालात्ययादभोजनेन तत्कार्यसिद्धिरित्यर्थः । वाक्यशेषात्सिद्धे संतनुयादिति विच्छेदस्य विवक्षितत्वं दर्शयति । अतः कालात्ययेऽपि प्रायश्चित्तं कृत्वैवोत्तरस्य करणम् । अधिकारैक्ये च सति संध्योपासनादिलोपेऽप्यभोजनेनापि संतानं भवत्येव ।

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥

इति मनुवचनाच्च ॥ ९ ॥

अविद्यमाने हव्ये यज्ञियानां फलानि जुहुयात् ॥ १० ॥

औपासनहोमेऽग्निपक्वान्यनग्निपक्वानि च वैश्वदेवे पक्वान्येव दर्श-पूर्णमासयोर्निर्वापादि कृत्वा ॥ १० ॥

पलाशानि वा ॥ ११ ॥

फलाभावे यज्ञियानां पर्णानि वा जुहुयात् । पूर्ववत्पाकनियमः॥११॥

अपो वा ॥ १२ ॥

सर्वाभावे प्रक्षालनं श्रपणं च नास्त्यर्थलोपात् ॥ १२ ॥

हुतं हि ॥ १३ ॥

हिशब्दो हेतौ । यस्माद्धोमकालेऽलाभनिमित्ते द्रव्येण च हुते हुतमेव भवत्यतो न तत्र वैगुण्यनिमित्तं प्रायश्चित्तमित्यर्थः ॥ १३ ॥

संतनुयादित्युक्तं कथमहुतस्य संतानमित्यत आह—

प्रायश्चित्तमहुतस्य ॥ १४ ॥

अतिपन्नकालस्य प्रायश्चित्तं संतानं भवतीत्यर्थः । प्रायश्चित्तं तु प्राजा-पत्याद्युक्तमेव सूत्रान्तरमताद्व्याहृतिहोमं वा कुर्यात् ॥ १४ ॥

आज्यं जुहुयाद्धविषोऽनादेशे ॥ १५ ॥

आज्यं जुहुयादनादेश इति सिद्धे हविष इति हविषः संस्कारमपि श्रुतमभिघार्येत्यादिष्वाज्यमेव स्यादित्येवमर्थम् ॥ १५ ॥

देवतामन्त्रानादेशे ॥ १६ ॥

यद्देवत्यं हविरुक्तं तद्देवताहोममन्त्रः स्यादग्नये स्वाहेतिवत् ॥ १६ ॥

प्रथमगर्भे तृतीये मासि पुंसवनम्॥ १७ ॥

सर्वगर्भार्थोऽयं संस्कार आधारसंस्कारद्वारेण सकृदेव क्रियते । मासा-न्तरे तु कर्तव्यमेव । प्रथमगर्भे दर्शादूर्ध्वमा दर्शादिको मासः । यत्र कुत्रचिद्दिनेऽप्याहिते गर्भे स एको मासो गणयितव्यः । संज्ञा व्यवहा-रार्था । कृत्प्राग्वैव । मासीति मास इत्यर्थः । अत्र केचिदतिक्रान्तेऽपि मुख्यकाले भसवात्प्राक्कालातिक्रमप्रायश्चित्तं कृत्वा कर्तव्यमेवाऽऽहुरुपन-

यने दर्शनात् । तेन च स्मृतितुल्यदूषणात् । कासुचित्स्मृतिषु काल-निर्देशेन विधानादापत्कालाभ्यनुज्ञानं सर्वदा संस्करणमस्त्येवमाहुः । जननादूर्ध्वं तु द्वाराभावात्प्रायश्चित्तेनैव जातं संस्कुर्यात् । एकदेशेऽग्नौ गर्भान्तरार्थं तु द्वितीये गर्भे कुर्यादेव । अपरे तु कालात्ययेऽधिकारा-भावात्प्रायश्चित्तमेवाऽऽहुः । पूर्व एव तु पक्षे(क्षः) श्रेयान् । अथापि संशयेऽपि लोपालोपान्यायतर(?) इति निदानकारोऽप्याह ॥ १७ ॥

स्नातामहतेनाऽऽच्छाद्य हुत्वा
पतिः पृष्ठतस्तिष्ठेत् ॥ १८ ॥

अहतेनाधरीयेणोत्तरीयेण च वस्त्रोपवेशनान्तं कृत्वा वधूर्दक्षिणतो दर्भेषूपवेश्य प्रपदान्तं कृत्वाऽन्वारब्धायां व्याहृतिभिस्तिसृभिर्हुत्वा पुनश्च हुत्वा वध्वाः पश्चाद्दर्भेषु तिष्ठेत् । पतिरिति भर्तुरभावे पालनाधिकृतनि-यमार्थम् । भर्तुरन्यः कुर्वन्प्रणीतेऽग्नौ लौकिके वा कुर्यात् ॥ १८ ॥

दक्षिणमंसमन्ववमृश्यानन्तर्हितान्नाभिदे-
शमभिमृशेत्पुमांसाविति ॥ १९ ॥

अन्विति । वधूमनुगतः पृष्ठीभूत इत्यर्थः । वध्वा अंसमन्ववमृश्य वस्त्रादिनाऽनन्तर्हितमभिमृशन्नेव पाणिना नाभिं प्रापय्य सकलमेवोदरं मन्त्रेणाभिमृशेत् ॥ १९ ॥

अथापरं न्यग्रोधशुङ्गामुभयतःफलामस्रामामकि-
मिपरिसृप्तां त्रिःसप्तैर्यवैः परिक्रीयोत्थापयेन्मा-
षैर्वा सर्वत्रौषधयः सुमनसो भूत्वाऽस्यां वीर्यं
समाधत्तेयं कर्म करिष्यतीति ॥ २० ॥

अथेत्यानन्तर्यार्थेन प्रयोगैक्यमाह । अतोऽनन्तरं ब्राह्मणभोजनम् । अपरमिति कर्मान्तरत्वमाह । अतो वामदेव्यगानान्तं कृत्वा ब्रह्मणे दक्षिणां दत्त्वा वक्ष्यमाणं कुर्यात्कर्मद्वयात्मकम् । इदमेकं पुंसवनाख्यं कर्म । अस्रामामशुष्कां न्यग्रोधाधिदेवताभ्यः परिक्रीणामीत्यनया बुद्ध्या सप्तमियवैर्मूल्यतयैव कल्पितैः शुङ्गां परितस्त्रिः प्रकीर्य शुङ्गामूर्ध्वाग्रां मन्त्रेण विकर्षेद्यथा छिद्येत । यवाभावे माषैः ॥ २० ॥

आहृत्य वैहायसीं कुर्यात् ॥ २१ ॥

गृहमागत्योपर्यनाच्छादिते देशे शुङ्गां निदध्यात् ॥ २१ ॥

कुमारी ब्रह्मचारी व्रतवती वा ब्राह्मणी पेषयेदप्रत्याहरन्ती ॥ २२ ॥

ब्राह्मणी ब्रह्मचारी वा यायतो भूत्वा प्राचीं दिशं प्रतिपेषयेत्॥२२॥

स्नातां संवेश्य दक्षिणे नासिकास्रोतस्या-सिञ्चेत्पुमानग्निरिति ॥ २३ ॥

पुनः स्नातामग्नेः पश्चात्प्राक्शिरसं दर्भेषु संवेश्य शुङ्गारसमासिञ्चेत् । सा च रसमुदरस्थं कुर्यादथ ब्राह्मणभोजनम् ॥ २३ ॥

अथास्याश्चतुर्थे मासि षष्ठे वा सीमन्तोन्नयनम् ॥ २४ ॥

अथेत्यकृतेऽपि तृतीये मासि पुंसवनेऽस्मिन्काले पुंसवनं कृत्वा सीमन्तकरणार्थम् । अस्या इति प्रथमगर्भनियमार्थम् ॥ २४ ॥

स्नातामहतेनाऽऽच्छाद्य हुत्वा पश्चिः पृषतस्ति-स्त्रभिरनुपूर्वया फलवृक्षशाखया सकृत्सीमन्तमुन्न-येत्त्रिःश्वेतया च शलल्याऽयमूर्जावतो वृक्ष इति ॥ २५ ॥

अनुपूर्वयेति । न्यग्रोधशुङ्गाधर्मयुक्तयेत्यर्थः । फलवृक्ष उदुम्बरः । ऊर्ज्जोदुम्बर इति श्रुतेः । अयमूर्जावतो वृक्ष इति मन्त्रवर्णात्तद्वदेव शाखामाहृत्य वैहायसीं कृत्वा पुंसवनवत्पुरतः स्थानान्तं कृत्वा तया शाखया मूर्ध्नि गतान्यञ्चाः केशान्प्रत्यञ्चमुन्नयेत्कृणोमीति मन्त्रान्तः । ततस्त्रिषु श्वेतया वराहसूच्या तद्वदेव राकामहमित्युन्नयेत् । रराणेति मन्त्रान्तः ॥ २५ ॥

कृसरस्स्थालीपाकः ॥ २६ ॥

कृसरस्तिलमिश्रः पाकधर्मयुक्तो भवेत् । चौले वृथा पक्व इति विशेषणात् । निर्वापमन्त्रस्तु नास्ति देवताभावात् ॥ २६ ॥

उत्तरयूतमवेक्षन्तीं पृच्छेत्किं पश्यसीति ॥ २७ ॥

स्पष्टम् ॥ २७ ॥

प्रजामिति वाचयेत्पतिः ॥ २८ ॥

अथोपरिष्टाद्धोमादि ब्राह्मणभोजनान्तं कृत्वा स्थालीपाकमश्नीयादिति गृह्यान्तर उक्तम् ॥ २८ ॥

प्रतिष्ठिते वस्तौ सोष्यन्तीहोमः ॥ २९ ॥

वस्तौ गर्भे प्रतिष्ठिते स्वस्थानात्प्रच्युते । प्रतिगर्भमेतज्जायमानार्थत्वात् । प्रणीताग्नावेतत् । नात्रान्वारम्भोऽसंस्कारत्वात् । अकृते यदि जननं स्यान्न तत्र पुनः क्रिया जनिष्यत इति मन्त्रलिङ्गात् । तत्राऽऽशौचादूर्ध्वं प्रायश्चित्तेनैव संस्कारः ॥ २९ ॥

या तिरश्चीति द्वाभ्याम् ॥ ३० ॥

प्रपदान्तं कृत्वा व्याहृतिभिस्तिसृभिर्हुत्वा या तिरश्चीति हुत्वा विपश्चित्पुच्छमिति जुहुयात् ॥ ३० ॥

असाविति नाम दध्यात् ॥ ३१ ॥

यदि पुंनामाभिलषितं विष्णुशर्मा नामेतिवन्मन्त्रस्थेऽसौशब्दे नाम निदध्यात् ।

युग्माक्षरं ब्राह्मणस्य द्व्यक्षरं चतुरक्षरम् ।
मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ॥
वैश्यस्य धनपुष्टिसंयुक्तं शूद्रस्य तु जुगुप्सितम् ।
शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ॥
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रैष्यसंयुतम् ।

इति मनुवचनात् । युग्माक्षरं ब्राह्मणस्य मङ्गल्यं शर्मवत्स्यात् । बलरक्षान्वितं क्षत्रियस्य धनपुष्टिसंयुक्तं वैश्यस्य । जुगुप्साप्रैष्य[संयुक्तं] शूद्रस्येति मनुवचनाच्च ॥ ३१ ॥

तद्गुह्यम् ॥ ३२ ॥

वैदिककर्मार्थमेतत् । व्यावहारिकं त्वन्यदेव । नामापरिज्ञान आभिचाराद्यसिद्धिः फलम् ॥ ३२ ॥

प्राङ्नाभिकृन्तनात्स्तनदानाच्च व्रीहियवौ पेषयेत् ॥ ३३ ॥

विसमासः प्राङ्नाभिकृन्तनादसंभवे स्तनदानात्प्राक्कर्तुम् । द्विवचनाद्युक्तिद्वयं जात्यभिप्रायेणेति केचित् ॥ ३३ ॥

शुङ्गावत् ॥ ३४ ॥

शुङ्गाप्रकारेण कुमारी ब्राह्मणी ब्रह्मचारी [वा] पेषयेदप्रत्याहरन्ती ॥३४॥

अङ्गुष्ठेनानामिकया चाऽऽदाय
कुमारं प्राशयेदियमाज्ञेति ॥३५॥

अङ्गुष्ठानामिकाभ्यामितिसिद्धे पृथग्ग्रहणं विषयद्वयसूचनार्थमन्नप्राशनमप्याभ्यामेवेति । चशब्दोऽन्नप्राशनेऽप्येतन्मन्त्रप्रापणार्थः ॥ ३५ ॥

सर्पिश्च मेधां त इति ॥ ३६ ॥

चशब्दः पूर्ववन्मेधां ते मित्रावरुणाविति मन्त्रादिर्मन्त्रनियमार्थः । अन्नप्राशन आभ्यां मन्त्राभ्यामन्नमेव प्राशयेत् । कालस्तु षष्ठे मासेऽन्नप्राशनमिति स्मृत्यन्तराल्लभ्यते । केचिच्चशब्दो हिरण्यमधुसमुच्चयार्थ इत्याहुः । तथा च मनुः—हिरण्यमधुसर्पिषामिति ॥ ३६ ॥

इति श्रीरुद्रस्कन्दविरचितायां गृह्यवृत्तौ द्वितीयपटलस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय खण्ड ।

---

जननाज्ज्योत्स्ने तृतीये तृतीयायां प्रातः
स्नाप्य कुमारमस्तमिते शान्तासु दिक्षु
पिता चन्द्रमसमुपतिष्ठेत्प्राञ्जलिः ॥ १ ॥

मातुः पितुर्वा कृत्या यदा कदाचिच्छिशोर्निष्क्रमणे प्राप्ते तदुपक्रमनियमोऽयम् । दैवान्मानुषाद्वा निष्क्रमणे कृतेऽपि संस्कारार्थमस्मिन्काले कुर्यादेव । एवमुत्तरत्रापि कालात्यये तूक्त एव न्यायः सर्वेषु संस्कारेषु । ज्योत्स्ना चन्द्रप्रभा तद्योगात्पूर्वपक्षो ज्योत्स्नः । जननादूर्ध्वं ये ज्योत्स्नास्तेषां तृतीये तृतीयायां तिथावित्यर्थः । यदि पूर्वपक्षे जननं स्यान्नासौ गणयितव्यः । कृत्स्नस्य जननादूर्ध्वत्वाभावात् ।

तथा च मनुः—

चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।

इति । उपस्थानकाले तृतीयानियमः । शान्तासूपरतादित्यरश्मिषु दिक्षु ।-उपतिष्ठेदिति दर्भेषु तिष्ठेत् । चन्द्राभिमुखो वक्ष्यमाणप्रकारेण कुमारमादाय मन्त्रैश्चन्द्रमसमभिदध्यादित्यर्थः ॥ १ ॥

शुचिनाऽऽच्छाय माता प्रयच्छेदुदक्शिरसम् ॥ २ ॥

वस्त्रेणाऽऽच्छाद्य दक्षिणतः स्थित्वा कुमारं पित्रे प्रयच्छेन्माता ॥ २ ॥

अनुपूर्वं गत्वोत्तरतस्तिष्ठेत् ॥ ३ ॥

पूर्वशब्दो दिग्वाची । अनुपृष्ठं गत्वा पितुरुत्तरतः प्रत्यङ्मुखी दर्भेषु तिष्ठेन्माता ॥ ३ ॥

यत्ते सुशीम इति तिसृभिरुपस्थायोदश्चं मात्रे प्रदाय यदद इत्यपामञ्जलिमवसिञ्चेत् ॥ ४ ॥

उदञ्चमुदक्शिरसं प्रातःकाले पात्रेण पूर्णां गृहीत्वाऽपस्तामिर्दर्भेषु दक्षिणतस्तिष्ठन्ब्राह्मणोऽञ्जलिं पूरयेद्भूमावञ्चं सिञ्चेत् ॥ ४ ॥

द्विस्तूष्णीमिति ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

जननादूर्ध्वं दशरात्राच्छतरात्रात्संवत्सराद्वा नाम कुर्यात् ॥६॥

जननदिवसादूर्ध्वं यो दशरात्रस्तस्मादूर्ध्वं यदहस्तस्मिन्नित्यर्थः । द्वादशेऽहनीति यावत् । एवमुत्तरयोः पक्षयोः । नाम्नोदगयनाद्यावरः कचित्संभवस्य नियमत्वात् (?) । असंभवविषयेऽपि तद्वशे कालविशेषो वैरूप्यप्रसङ्गात् (?) ॥ ६ ॥

स्नाप्य कुमारं करिष्यत उपविष्टस्य शुचिनाऽऽ-च्छाय माता प्रयच्छेदुदक्शिरसम् ॥ ७ ॥

होमारम्भात्पूर्वं दर्भेषूपविष्टस्य शुचिना वस्त्रेणाऽऽच्छाद्य दक्षिणत उपविश्य प्रयच्छेदुदक्शिरसम् ॥ ७ ॥

अनुपृष्ठं गत्वोत्तरत उपविशेत् ॥ ८ ॥

दर्भेषु माता ॥ ८ ॥

हुत्वा कोऽसीत्यस्य मुख्यान्प्राणानभिमृशेत् ॥ ९ ॥

उदक्शिरसं कुमारं स्वाङ्के धारयन्प्रपदान्तं कृत्वा द्विस्तिसृभिर्व्याहृतिभिर्हुत्वा कुमारस्य चक्षुषी श्रोत्रे नासिके चाभिमृशेत् ॥ ९ ॥

असाविति नाम कुर्यात्तदेव मन्त्रान्ते ॥ १० ॥

यस्तोष्यन्तीहोमे तदेव परिददातु विष्णुशर्मन्निति वक्तुर्यात् । मन्त्रान्तेऽसौशब्दो न मध्ये ॥ १० ॥

मात्रे प्रथममाख्याय ॥ ११ ॥

मात्रे प्रयच्छेदुदविशरसमिति शेषः । प्रथममाख्याय । प्रथमशब्दस्य द्वितीयापेक्षत्वात्प्रथमं गुह्यं नाम मातुरुक्त्वा द्वितीयमपि व्यावहारिकं नामेदानीं ब्रूयादित्यर्थः । ततो भोजनान्तम् ॥ ११ ॥

विप्रोष्याङ्गादङ्गादिति पुत्रस्य मूर्धानं परि-
गृह्णीयात्पशूनां त्वेत्यभिजिघ्रेत् ॥ १२ ॥

ग्रामान्तरे रात्रिमुषित्वा यदाऽऽगच्छति तदा पुत्रमायान्तमङ्कमासेव्य दक्षिणेन पाणिनोभाभ्यां हस्ताभ्यां परितोऽङ्गादङ्गादित्यनेन मन्त्रेण तस्य मूर्धानं परिगृह्य पशूनां त्वेत्यनेन मन्त्रेण मूर्धानमभिजिघ्रेत्ततोऽसौ. शब्दे विष्णुशर्मन्निति वदन्ब्रूयात् ॥ १२ ॥

तूष्णीं स्त्रियाः ॥ १३ ॥

जातकर्मादिचौलान्तं मन्त्रवर्जं स्त्रियाः कुर्यात् । साङ्गस्तु होमो निवर्तते मन्त्रादिलोपे देवतोद्देशस्यापि लोपात् । मानवेऽप्युक्तम्—

अमन्त्रिता तु कार्येयं स्त्रीणामावृतशेषतः ।
संस्कारं तु शरीरस्य यथाकालं यथाक्रमम् ॥

इति । उपनयनं तु नास्ति तच्छ्रुतिवचनात् । उपनयनाभावाच्चाध्ययनम् । तदभावात्तथा नियमाश्च व्रतं न सन्ति । आहृत्य विहितास्तु वचनबलाद्ब्रह्मणैवेति कालापकृततया विवाहस्य करणात् । अतो विवाहात्प्रागनुपनीततुल्यमाचरेत् । ऊर्ध्वं तु भर्तृतुल्यं सहधर्मचरं तामिति ॥ १३ ॥

तृतीये वर्षे चौलम् ॥ १४ ॥

अत्र जननादिमासगणनया [द्वा]दश मासाः संवत्सरो न चैत्रादिः ॥

तत्र नापित उष्णोदकमादर्शः क्षुर औदु-
म्बरः पिञ्जूल्य इति दक्षिणतः ॥ १५ ॥

नापितो वपनकर्ता आपस्तम्बसूत्रपाणिरायसेन प्रच्छिद्येति वचनात् । उष्णोदकं कंसपात्रपूर्णम् । आदर्शो रक्तलोहमय औदुम्बरो वा विकल्पते । क्षुरो दुर्भः । पिञ्जूल्य एकविंशतिः । एतान्यग्नेर्दक्षिणतः स्युः ॥ १५ ॥

आनडुहो गोमयः कृसरस्थाली-
पाको वृथापक इत्युत्तरतः ॥१६॥

पुंगवशकृत्पाकधर्मरहितोऽन्यन्तरसिद्धस्तिलमिश्रः स्थालीपाकश्चाग्नेरुत्तरतः स्याताम् ॥ १६ ॥

माता च कुमारमादाय ॥ १७ ॥

पृथङ्निर्देशः कर्तुरुत्तरत उपवेशनार्थः । मातुर्न दर्भासनम् । चकारः कर्तुरुत्तरत इत्यस्यानुकर्षणार्थः । एतत्रापितादिस्थापनं ब्रह्मोपवेशनादूर्ध्वं स्यात् । एतान्यहोमार्थान्यतः स्त्रिया अपि स्युः । अठ्यावृत्तिरव्यवायश्च तेषां नावश्यं स्याताम् । तथा परिषेचनेऽभिपरिहरणम् ॥ १७ ॥

हुत्वा यमगादिति नापितं प्रेक्षेत्सवितारं ध्यायन्निति ॥१८॥

प्रपदान्तं कृत्वा मातृप्रयुक्ते कुमारेऽन्वारब्धे व्याहृतिभिस्तिसृभिर्हुत्वा पुनः समस्ताभिश्च हुत्वा यमगादिति नापितं प्रेक्षेत्सवितारं ध्यायन् ॥ १८ ॥

उष्णेनेत्युष्णोदकं प्रेक्षेद्वायुं ध्यायन् ॥ १९ ॥

वायुं मनसा ध्यायन् । स्पष्टम् ॥ १९ ॥

आप इत्युन्देत् ॥ २० ॥

दक्षिणतः केशानुष्णोदकेन क्लेदयेत् ॥ २० ॥

विष्णोरित्यादर्शं प्रेक्षेदौदुम्बरं चेति॥ २१ ॥

गतमिति ॥ २१ ॥

ओषध इति दर्भपिञ्जूलीः समोर्ध्वाग्रा अभिनिधाय केशैः
संहृत्य स्वधित इत्यादर्शेन क्षुरेणौदुम्बरेण वा ॥ २२ ॥

दर्भाग्रसंयुक्तान्केशानन्यतरेण संयोजयेदित्यर्थः ॥ २२ ॥

येन पूषेति दक्षिणतास्त्रिः प्राञ्चं प्रोहेत् ॥ २३ ॥

आदर्शेन क्षुरेणौदुम्बरेण वा केशान्दर्भाग्रयुक्तान्संमृज्यादित्यर्थः । मन्त्रस्यापि त्रिरावृत्तिः ॥ २३ ॥

सकृदायसेन प्रच्छियाऽऽनडुहे गोमये केशान्कुर्यात् ॥२४॥

अमन्त्रकमेतत् ॥ २४ ॥

उन्दनमनुमृत्यैवं पश्चादुत्तरतश्च ॥ २५ ॥

स्पष्टम् ॥ २५ ॥

आयुषमिति पुत्रस्य मूर्धनि परिगृह्य जपेत् ॥ २६ ॥

उभाभ्यां हस्ताभ्यां परितो गृहीत्वा ॥ २६ ॥

उदङ्ङुत्सृप्य कुशली कारयेद्यथागोत्रकुलकल्पम् ॥ २७ ॥

वपनं कारयेन्नापितेन । गोत्रादिवशेन शिखाव्यवस्था स्मर्यते । तदनुसारेण नापितं संप्रेष्य होमं समापयेत् ॥ २७ ॥

अरण्ये केशान्निखनेयुः ॥ २८ ॥

केशान्गोमयेन प्रच्छाद्य कर्मकारा निखनेयुः ॥ २८ ॥

स्तम्बे निदधत्येके ॥ २९ ॥

दर्भस्तम्बे ॥ २९ ॥

गौर्दक्षिणा ॥ ३० ॥

ब्रह्मणे देया । अत्रेदं चिन्त्यते—गर्भाधानादयः संस्काराः शरीरं संस्कुर्वन्तः सर्वेष्वनुष्ठार्थेषु कर्मस्वत्र योग्यतातिशयं कुर्वन्ति फलं प्रति ग्रहणयोग्यतातिशयं च न पुनरयोग्यस्यैव योग्यतां कुर्वन्ति । संस्कारवन्तमभिनिर्दिश्य पुरुषमात्रस्यैव कर्मणां विधानात्स्वत एव विद्यमानत्वाद्योग्यतायाः । नाप्यकिंचित्करा आनर्थक्यप्रसङ्गात् । नापि त(ते) स्वत एव पुरुषार्थः संस्कारश्रुतिविरोधात् । योग्यतातिशयोऽपीत्थं संभवति यथा पानीयस्य गन्धादि क्षुरादेश्च तैक्ष्ण्यादि । चौलपर्यन्ताः सर्वे संस्कारा अतिक्रान्ताः स्वकालमुपनयनात्प्रागेव कालातिपत्तिप्रायश्चित्तं कृत्वा कर्तव्याः । ऊर्ध्वं त्वकृतानां लोप एव तद्द्वितीयं जन्मेति जन्मान्तरव्यपदेशात् । संस्कारेषु द्विप्रकारं शास्त्रमस्ति । एकं पितुरुपदेशकं पुत्रमुत्पाद्यैतैः संस्कुर्याच्चेति, अपरं पुत्रस्यैते संस्कारा आत्मार्थतया कर्तव्या इति । नन्वस्य व्यापारे कथं प्रामाण्यम् । सत्यम् । यदि व्यापारकर्तृताबोधः स्यात् । कर्मजन्यस्य हि पुरुषार्थस्य पुरुषविशेषतया जन्यताशब्देन बोध्यते । सा च कदाचित्स्वव्यापारः स्यात्कदाचित्परव्यापारः स्यात् । इयान्विशेषः । स्वव्यापारे तत्सिद्धे स्वयमेव प्रवर्तते परव्यापारे तु यदि स्वाधिकारादेव प्रवर्तनमन्यं लभते ततोदास्ते प्रसङ्गात्कार्यसिद्धेः । अलाभे तु स्वयमेव प्रयोजनमिति केनाप्युपायेन ।

नन्वसौ शिशुत्वात्प्रतिपत्तुं न शक्नोति गर्भाधानाद्यवस्थायां तु सुतरां प्रतिपत्त्यसंभवः । सत्यम् । यस्यैव फलं तस्यैव प्रतिपत्त्युत्पादकत्वेन शब्दस्य प्रामाण्यं स्यात् । स्वर्गकामो यजेतेति स्वर्गकामिण इदं कर्तव्यमिति स्यात् । तस्यान्यस्य याऽविशेषेण प्रमितिं जनयत्वे(दे)व शास्त्रमुभयोरपि प्रमाणमेव । इयान्विशेषः । स्वर्गकामश्चेन्ममेवेदं कर्तव्यमिति प्रतिपद्यतेऽन्यश्चेत्स्वर्गकामिण इदमिति प्रतिपद्यते न ममेदम् । कामसदसत्त्वोपाधिनिमित्तोऽसौ हेतुर्न शब्दस्य व्यापारः । अतः पिता तस्य कर्तव्यं शास्त्रेण निश्चित्याऽऽत्मनश्चावश्यकर्तव्यतां प्रतिपद्य तत्करोति । पितुरभावे तल्लक्षणेऽधिकृतस्तदभावे यः परं परोपकारं कर्तुं प्रवृत्तो यो वा तं मत्त्यात्मनो गुरुत्वमिच्छति हितैषी वा कश्चित्कुर्यात्कारयेद्वा स्वाधिकारः प्रवृत्तश्चेत् । आत्मीयमेव द्रव्यं ब्रह्मणे दक्षिणां दद्यात् । तत्कार्यप्रवृत्तश्चेत्कुमारस्य यत्स्वं तदेव ॥ ३० ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ द्वितीयपटलस्य
तृतीयः खण्डः ॥ ३ ॥

अथ चतुर्थः खण्डः ।

अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥ १ ॥

अत्र गर्भाधानादिवर्षगणनं गर्भादिः संख्या वर्षाणामिति स्मृतेः । एवमुत्तरत्रापि । वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यमिति शास्त्रान्तरे दर्शनात्ताभ्यामविरोधादुभयनस्य समुच्चयः केचिदित्याहुः । शरदि वैश्यमित्यनेन विरोधात्तेन च तुल्यश्रुतित्वाद्वसन्तादेर्विकल्प एवेति ॥१॥

तस्याऽऽषोडशादनतीतः काल इति ॥ २ ॥

आङभिविधौ । आपत्कालोऽयमत ऊर्ध्वं पतितो भवति । एवमुत्तरत्रापि ॥ २ ॥

एकादशे क्षत्रियमिति ॥ ३ ॥

उपनयेदिति वर्तते ॥ ३ ॥

तस्याऽऽद्वाविंशादिति ॥ ४ ॥

अनतीतः काल इति वर्तते ॥ ४ ॥

द्वादशे वैश्यमिति ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

तस्याऽऽचतुर्विंशादिति ॥ ६ ॥

स्पष्टम् ॥ ६ ॥

कुशलीकृतमलंकृतमहतेनाऽऽच्छाद्य हुत्वाऽग्ने व्रतपत इति ॥ ७ ॥

कुशलीकृतरूपं चाङ्गं च वपनालंकारौ । अतस्तौ चावश्यमुपनयनमुहूर्तं कर्तव्यौ तत्र कर्तव्यं वपनं कृत्वाऽलंकृत्य नान्दीमुखं कृत्वा कौतुकबन्धनं कृत्वा पुण्याहं वाचयित्वा कुमारं भोजयित्वाऽहतवाससा नवेनाऽऽच्छाद्य यज्ञोपवीतमजिनं चामन्त्रकं प्रतिमुच्याऽऽचमयित्वाऽऽत्मनो दक्षिणत उदगग्रेषु दर्भेषूपवेश्य प्रणवान्तं कृत्वाऽन्वारब्धे माणवके व्याहृतिभिस्तिस्रभिर्हुत्वा पुनश्च समस्ताभिश्चतसृभिर्हुत्वाऽग्ने व्रतपत इत्यादिभिः पञ्चभिर्माणवकं हावयेन्मन्त्रलिङ्गात् । मन्त्रलिङ्गनिरीक्षणार्थमेव हि पञ्चभिरित्यनेनोक्तम् ॥ ७ ॥

उत्तरतोऽग्नेः प्रत्यङ्मुखमवस्थाप्याञ्जलिं कारयेत् ॥ ८ ॥

आग्न्यात्मनोरन्तरेण माणवकं गमयित्वा प्रदक्षिणावृतं दर्भेषु प्रत्यङ्मुखमवस्थाप्य कोशाञ्जलिं कारयेन्माणवकमाचार्यः ॥ ८ ॥

स्वयं चोपरि कुर्यात् ॥ ९ ॥

प्रत्यङ्मुखदर्भेषु स्थितः ॥ ९ ॥

दक्षिणतस्तिष्ठन्मन्त्रवान्ब्राह्मण आचार्यायोदकाञ्जलिं पूरयेत् ॥ १० ॥

आचार्यस्य दक्षिणत उदगग्रेषु दर्भेषूदङ्मुखस्तिष्ठन्ब्राह्मणो ब्रह्मचर्यमागामुपयानयस्वेत्येतन्मन्त्रवित् । अत एव कर्मविदेव ब्रह्मा । कचित्कृतास्त्विति ब्राह्मण इत्यत्राप्यञ्जलिपूरणे ब्राह्मणनियमार्थं यथा चन्द्रोपस्थाने ॥ १० ॥

आगन्त्रेति जपेत्प्रेक्षमाणे ॥ ११ ॥

अञ्जलिस्थमुदकं प्रेक्षमाणे माणवक आगन्त्रेति जपेदाचार्यः । ब्रह्मचर्यमागामुपयानयस्वेति ब्राह्मणो ब्रह्मचारिणं वाचयेन्मन्त्रलिङ्गात् ॥ ११ ॥

को नामासीत्युक्तो देवताश्रयं नक्षत्राश्रयं वाऽभि-
वादनीयं नाम ब्रूयादसावस्मीति ॥ १२ ॥

आचार्येणोक्तः स देवताश्रयं स्वजन्मनक्षत्रं यद्दैवत्यं यद्देवताश्रयं नामाऽऽग्नेय इतिवन्नक्षत्राश्रयं वा स्वजन्मनक्षत्राश्रयमाश्वयुग्विष्णुशर्मनामाऽहमस्मीतिवत्प्रतिब्रूयान्माणवकोऽभिवादनीयं गुह्यम् । आश्वयुग्भरणी कृत्तिका रोहिणी मृगशीर्षं आर्द्रा पुनर्वसू तिष्य आश्लेषा मघा पूर्वा फल्गुन्युत्तरा फल्गुनी हस्ताश्चित्रा स्वाती विशाखाऽनुराधा ज्येष्ठा मूलं पूर्वाषाढोत्तराषाढा श्रवणं धनिष्ठा शतभिषक्प्रोष्ठपदोत्तरा प्रोष्ठपदा रेवत्येतानि नक्षत्राणि । अश्विनौ यमोऽग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पाः पितर अर्यमा भगः सवितेन्द्रो वायुरिन्द्राग्नी मित्र इन्द्रः प्रजापतिः पितरो वाऽऽपः विश्वे देवा विष्णुर्वसव इन्द्रोऽजैकपादहिर्बुध्न्यः पूषैतानि दैवतानि । आश्वयुजोऽपभरणीयः कार्तिकेयो रौहिणेयो मार्गशीर्ष आर्द्रकः पौनर्वसुः पौष आश्लेषो माघः फाल्गुन औत्तरफाल्गुनो हास्तश्चैत्रः स्वातिको वैशाख आनूराधो ज्यैष्ठो मौल आषाढ औत्तरपाढः श्रायणः श्रविष्ठः शतभिषजः प्रौष्ठपद औत्तरप्रोष्ठपदो रैवतो नक्षत्राश्रयनिर्देशः । आश्विनो याम्य आग्नेयः प्राजापत्यः सौम्यो रौद्र आदित्यो बार्हस्पत्यः सार्प्यः पित्रिय आर्यमणो भागः सावित्र ऐन्द्रो वायव्य ऐन्द्राग्नो मैत्र ऐन्द्रः पित्र्य आप्यो वैश्वदेवो वैष्णवो वासव ऐन्द्रोऽजैकपादोऽहिर्बुध्न्यः पौष्यो देवताश्रयनिर्देशः ॥ १२ ॥

उत्सृज्यापो देवस्य त इति दक्षिणोत्तराभ्यां
हस्ताभ्यामञ्जलिं गृह्णीयादाचार्यः॥ १३ ॥

माणवकाञ्जलावुत्सृज्यासोऽश्वे विष्णुशर्मन्निति ब्रूयात् ॥ १३ ॥

सूर्यस्येति प्रदक्षिणमावर्तयेत् ॥ १४ ॥

अञ्जलिं गृह्णन्नेव यावत्प्राङ्मुखः स्यात्तावदावर्तयेत् । असाविति पूर्ववत् ॥ १४ ॥

दक्षिणमंसमन्ववमृश्यानन्तर्हितां नाभि-
मालभेत्प्राणानामिति ॥ १५ ॥

स्पष्टम् ॥ १५ ॥

अथैनं परिदद्यादन्तकप्रभृतिभिः ॥ १६ ॥

अथशब्दो विशेषवाची । अनन्तर्हितमेव पाणिभ्यां परितो गृह्णीयात् । अन्तक इदं ते परिददाम्युदरमित्युदरम् । अहुर इदं ते परिददाम्युर इत्युरः । कृशान इदं ते परिददामीति कण्ठम् ॥ १६ ॥

दक्षिणमंसं प्रजापतये त्वेति ॥ १७ ॥

दक्षिणेन पाणिना गृह्णीयादिति शेषः । इतः प्रभृत्यसौशब्दे विष्णुशर्मन्निति माणवकनाम ब्रूयादाचार्यः ॥ १७ ॥

सव्येन सव्यं देवाय त्वेति ॥ १८ ॥

सव्येन पाणिना सव्यांसं गृह्णीयादित्यर्थः ॥ १८ ॥

ब्रह्मचार्यसीति ॥ १९ ॥

विष्णुशर्मन्निति माणवकमुक्त्वा ॥ १९ ॥

संप्रेष्योपविश्य दक्षिणजान्वक्तमञ्जलिकृतं प्रदक्षिणं मुञ्जमेखलामावध्यमन्त्रं वाचयेदियं दुरुक्तादिति ॥ २० ॥

समिधमाधेहीत्यादिभिश्चतुर्भिः संप्रेष्य दर्भेषूपविष्टं नमस्काराञ्जलिकृतं त्रिवृत्कृतां मुञ्जमेखलां प्रदक्षिणवृत्तां त्रिः परिधारयन्नाचार्यो माणवकं मन्त्रं वाचयेत् ॥ २० ॥

अधीहि भो इत्युपसीदेत् ॥ २१ ॥

अग्नेः पश्चात्स्वस्थान आचार्य उपविष्टे माणवकः पूर्वपरप्रत्यागम्य दक्षिणेन पाणिना सव्यं पाणिमनङ्गुष्ठमुपसंगृह्याधीहि भो इति दक्षिणत उदगग्रेषु दर्भेषु प्राङ्मुख उपविशेदाचार्याभिमुखे चक्षुर्मनसि कृत्वा प्रागग्रेषु दर्भेषूदङ्मुखो वा । अयं विशेषः स्मृत्यन्तराल्लभ्यते—प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वेति । आचार्यश्च तं तथा कारयेत् । तदेतदाचार्यस्य समीपनयनमुपनयनशब्दस्य प्रवृत्तिनिमित्तम् । अथोपरिष्टाद्धोमादि समापयेत् । नन्वेवं सति सावित्र्याध्यापनादेर्होमप्रयोगान्तर्भावो न स्यात् । नायं दोषः । उपनीतमध्यापयेदित्युपनयनोत्तरकालभावित्वश्रवणादध्यापनस्य । ननु वेदाध्यापनं तत्रोक्तमिह तु सावित्र्याध्यापनम् । नायं दोषः । सर्ववेदाध्यापनोपक्रमरूपत्वात्सावित्र्यध्यापनस्य ।

तथा हि सर्वेभ्यो वेदेभ्यः सावित्री त्रिरुच्यत इति ब्राह्मणम् । अपि च सर्ववेदात्मकत्वं सर्ववेदसारत्वं च सावित्र्यादीनां श्रुतिस्मृतिषु श्रूयत एव । तथा हि—' त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ' इत्यादिभिः । अत उपरिष्टाद्धोमादि समाप्यैव सावित्र्याद्यध्यापनम् ॥ २१ ॥

अत ऊर्ध्वं सावित्र्यादेरध्यापनप्रकारमाह—

तस्मा अन्वाह सावित्रीं पच्छोऽर्धर्चशः सर्वामिति॥२२॥

पादे पादेऽवसायाध्यापयीत । ततः पादद्वयेऽवसाय ततः सर्वां संहृत्य ॥ २२ ॥

महाव्याहृतीश्चैकैकशः ॥ २३ ॥

भूर्भुवः स्वरिति प्रत्येकमवसाय ॥ २३ ॥

ओंकारं च ॥ २४ ॥

ओमिति चाध्यापयीत ॥ २४ ॥

प्रयच्छत्यस्मै वार्क्षं दण्डम्॥ २५ ॥

स्मृत्युक्तदण्डं प्रयच्छेदाचार्यः ॥ २५ ॥

सुश्रवस्सुश्रवसं मेति ॥ २६ ॥

माणवकः प्रतिगृह्णीयादिति शेषः ॥ २६ ॥

समिधमादध्यादग्नये समिधमिति ॥ २७ ॥

यज्ञियां समिधं तस्मिन्नेवाग्नावादध्यान्माणवकः । औपासनवदुभयतः परिषेचनम् ॥ २७ ॥

भैक्षं चरेत् ॥ २८ ॥

भवति भिक्षां देहीति ब्राह्मणः । भिक्षां भवति देहीति क्षत्रियः । भिक्षां देहि भवतीति वैश्यः । दण्डहस्त आदित्यमुपस्थायाग्निं प्रदक्षिणीकृत्य भैक्षं याचेत ॥ २८ ॥

मातरमग्रे ॥ २९ ॥

प्रथमं मातरं याचेत ॥ २९ ॥

अथान्याः सुहृदः ॥ ३० ॥

सुहृद इति स्त्रीपुंसोः साधारण्यात्स्त्रीनियमार्थमन्या इति विशिनष्टि ॥ ३० ॥

आचार्याय भैक्षं निवेदयेत् ॥ ३१ ॥

भैक्षमितीदमुपयुज्यतामिति ब्रूयात् । आचार्योऽपि गृहीत्वाऽतिप्रयच्छेद्वा यथारुचि । उपनयनं वेदाध्ययनाङ्गं पुरुषसंस्कारद्वारेण तदर्थमेव क्रियमाणमपेक्षते । अध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहो द्विजातीनामित्यधिकृत्य विधानादुपनयनाच्च द्विजातित्वसिद्धेः । अत उपनयनरहितानां तेष्वधिकारे न केवलमवैधत्वं किंतु निषेधात्प्रत्यवायश्च ॥ ३१ ॥

तिष्ठेदाऽस्तमयात्तूष्णीं त्रिरात्रम् ॥ ३२ ॥

क्षारलवणे दुग्धमिति वर्जयेत् ॥ ३३ ॥

स्पष्टे सूत्रे ॥ ३२ ॥ ३३ ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ द्वितीयपटलस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमः खण्डः ।

---

गोदाने चौलवत्कल्पः ॥ १ ॥

अष्टौ व्रतानि स्मर्यन्ते छन्दोगानाम् । उपनयनं गोदानं व्रातिकमादित्यव्रतं महानाम्निकमौपनिषदं ज्यैष्ठिकं ब्रह्मसामव्रतमिति । तेषामुपाकरणविसर्गौ च स्मर्येते । तत्रोपनयनं कृत्स्नाध्ययनार्थमपि सद्व्रतान्तरनिरपेक्षं सावित्र्यध्ययने तत्साम्नाध्ययने चोपकरोतीति व्रतान्तरत्वेन व्यपदिश्यते निरपेक्षाकारस्य च विसर्गः क्रियते । उपनीतं वक्ष्यमाणान्यधःशय्यादीनि स्मृत्युक्तानि च नियमादीनि समाचरन्तं सावित्रीं तत्साम चाध्याप्य यथाप्रज्ञे काले गते विसर्गं कुर्यात् । हविष्यमेकभुक्तं भोजयित्वा प्रागुदग्वा ग्रामादवा आभाभिष्क्रम्य कमण्डलुनोदकं गृहीत्वा प्रागुदक्प्रवणे देशे गोमयेनोपलिप्य कुशैः प्रदक्षिणं मण्डलं कृत्वोदिते तेनोदकेनाऽऽचम्य दर्भमुष्टिं गृहीत्वा प्रह्वीभूतो वामदेव्येन मण्डलं प्रविशेदाचार्यः । शिष्यश्च तमन्वारभ्य तथा प्रविशेत्पुनराचम्य प्रपदान्ते कृत्वाऽन्वारब्धे व्याहृतिभिर्हुत्वेन्द्राय वृहद्भानवे स्वाहा प्रजापतये मनवे स्वाहेत्याघारावाघारावाज्यभागौ च हुत्वाऽग्नये स्वाहा सोमाय स्वाहा रुद्राय स्वाहेन्द्राय स्वाहा ब्रह्मणे स्वाहा प्रजापतये स्वाहा

विश्वेभ्यो देवेभ्यः स्वाहा ऋषिभ्यः स्वाहा ऋग्भ्यः स्वाहा यजुर्भ्यः स्वाहा सामभ्यः स्वाहा श्रद्धायै स्वाहा प्रज्ञायै स्वाहा मेधायै स्वाहा सावित्र्यै स्वाहा सदसस्पतये स्वाहाऽनुमतये स्वाहेति च हुत्वा होमं समाप्य कुशेष्वासीनो दक्षिणेन पाणिना कुशमुष्टिं धारयन्यथाविधं वक्ष्यमाणस्तथाविधं श्रावयेत् । ओंपूर्वा व्याहृतीः सावित्रीं च चतुरनुद्रुत्य मनसा साम सावित्रं च सोमं राजानं ब्रह्म जज्ञानमिति द्वे पञ्चनिधनं वामदेव्यमैरूपवाचोव्रतानि च मन्त्रश्रेयसी च पूर्वं गीत्वा गायत्रं श्रावयेत् । अथोपरिष्टात्सत्र ह महासामकल्माषवामदेव्यानि गीत्वा पुनरेकदेशं प्रणीयाथानुप्रवचनीयहोमः । प्रपदान्तं कृत्वाऽन्वारब्धे व्याहृतिभिस्तिसृभिर्हुत्वा पुनश्च समस्ताभिश्चतसृभिर्हुत्वाऽग्ने व्रतपत इत्यादिभिः पञ्चभिर्ब्रह्मचारिणं हावयेत् । उपनयनव्रतमचारिष तदशकं तेनाराद्धमिदमहमनृतात्सत्यमुपागामिति मन्त्रविकारः । ऋच साम सदसस्पतिमिति चाऽऽज्यं जुहुयात् । उपरिष्टाद्धोमादि दक्षिणान्त कृत्वा तस्मिन्नेवाग्नावग्निकार्यं कारयेत् । ततो वामदेव्येन क्रमशो निष्क्रमणं ततो ब्राह्मणभोजनम् । अथ गोदानोपाकरणम् । तत्र चौलवत्केशकृत्तिर्वपनमित्यर्थः । वपनाङ्गत्वाच्छ्राविताद्रध्यतिदिश्यते । कृसरस्थालीपाको माता ऽध्यायुषमिति च प्रय निवर्तते । अतदर्थत्वाद्धोमस्त्वस्ति । एवं चौलोपनयनगोदानेष्विति वचनात्समस्ताभिर्व्याहृतिभिर्होमः कर्तव्यः ॥ १ ॥

सलोमं वापयेत् ॥ २ ॥

स्पष्टम् ॥ २ ॥

गोअश्वाविमिथुनानि दक्षिणाः पृथग्वर्णानाम् ॥ ३ ॥

गोमिथुनमश्वमिथुनमविमिथुनं च यथाक्रमं ब्राह्मणादीनां गोः स्पष्टं, स्पष्ट, ॥३॥

सर्वेषां वा गौः ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

अजः केशप्रतिग्रहाय ॥ ५ ॥

यः केशान्निखनेत्तस्मै देयः ॥ ५ ॥

उक्तमुपनयनम् ॥ ६ ॥

चौलवद्वपनान्तं कृत्वा पुनरेकदेशं प्रणीयोपनयनवत्कार्यं कुर्यात् । गोदानव्रतं चरिष्यामीति मन्त्रविकारः । समीपनयनस्याध्यापनार्थत्वात्सावित्र्याद्यध्यापनमपि तद्वदेव कुर्यात् । यदुपनयनं गोदानेऽपि तदेवोक्तमिति सूत्रयोजना ॥ ६ ॥

आचरिष्यन्तं संवत्सरम् ॥ ७ ॥

यस्य संवत्सरं चरिष्यामीति बुद्धिस्तमेवेदं व्रतं ग्राहयेत् । यस्य तु न चरिष्यामीति बुद्धिस्तं न ग्राहयेदित्यर्थः । तमपि केनाप्युपायेन तथा बुद्धिमुत्पाद्य ग्राहयेदेव ॥ ७ ॥

अनियुक्तं त्वहतम् ॥ ८ ॥

अनियुक्तमनियतम् । तुशब्दोऽवधारणार्थोऽहतमेवानियतमेव । सूत्रधर्मेमेखलादण्डा नियता एव । असत्यवधारणे कृतकार्यतया तेषामपि निवृत्तिराशङ्क्येतातः पुराणानि त्यक्त्वा नवानि गृह्णीयादित्यर्थः ॥ ८ ॥

तथाऽलंकारः ॥ ९ ॥

अनियतः ॥ ९ ॥

अथ व्रतिनो नियमा उच्यन्ते—

अधः संवेशी ॥ १० ॥

खट्वादिनिषेधः ॥ १० ॥

अमधुमांसाशी स्यात् ॥ ११ ॥

स्पष्टम् ॥ ११ ॥

मैथुनक्षुरकृत्यस्नानावलेखनदन्तधावन-
पादधावनानि वर्जयेत् ॥ १२ ॥

क्षुरकृत्यनिषेधो नोपरिच्छेदनस्य । शुद्ध्यर्थस्य स्नानस्य निषेधो न विहितस्य । अवलेखनं स्वदेहमलापकर्षणम् । पादधावनं नखकृन्तनादि ॥ १२ ॥

नास्य कामे रेतः स्कन्देत् ॥ १३ ॥

कामे निमित्ते रेतःस्कन्दनं न कुर्यात् । अनेनैव निषिद्धे मैथुननिषेधो दोषभूयस्त्वसूचनार्थः ॥ १३ ॥

न गोयुक्तमारोहयेत् ॥ १४ ॥

गवा युक्तं रथादि ॥ १४ ॥

न ग्रामोपानहौ ॥ १५ ॥

उपानहौ ग्रामे वर्जयेन्न बहिर्निषेधः । एषु सूत्रेष्वधिकारवचनानि सजातीयस्मृत्युक्तोपसंग्रहार्थानि ॥ १५ ॥

मेखलाधारणभैक्षचर्यदण्डसमिदाधानोपस्प-
र्शनप्रातरभिवादा नित्यम् ॥ १६ ॥

धारणग्रहणं वस्त्रसूत्रचर्मणामुपसंग्रहणार्थम्। भैक्षचर्यमुक्तेन प्रकारेण। चर्यग्रहणं सायंप्रातर्भैक्षभोजनार्थम्। दण्डस्यानन्तरं धारणशब्दोऽध्याहर्तव्यः। विनष्टानप्सु प्रवेश्यान्यान्मन्त्रेण गृह्णीयात्।

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥

इति मनुवचनाच्च। समिदाधानं देव सवितः प्रसुवेति लौकिकेऽग्नौ परिचरणतन्त्रेण सायं प्रातश्च। आधानग्रहणं स्वाहुतिभिश्च समस्तान्ताभिः समिदाधानार्थम्। यज्ञिया एव समिधः। उपस्पर्शनं स्नानम्। प्रातरभिवादो गुरूणां कण्ठसमौ बाहू उद्धृत्य व्यस्तेन पाणिना दक्षिणेन दक्षिणं पादं गृह्णीयात्सव्येन च सव्यमभिवादयेद्विष्णुशर्मा नामाहमस्मि भो इतिवद्यथानाम। नित्यमिति समाप्तेऽपि व्रतेऽथा स्नानादनुवृत्त्यर्थम्। एते सर्वव्रतसाधारणा अनियुक्तमित्यारभ्योक्ताः ॥ १६ ॥

गोदानव्रातिकादित्यव्रतोपनिषज्ज्ये-
ष्ठसामिकाः संवत्सराः ॥ १७ ॥

संवत्सरं च कर्तव्या इत्यर्थः ॥ १७ ॥

नाऽऽदित्यव्रतमेकेषाम् ॥ १८ ॥

एकेषां शाखिनामादित्यव्रतं नास्ति येषां शुक्रियपाठो न विद्यत इत्यर्थः। अपरा व्याख्या—एकेषामाचार्याणां मतेन सर्वेषामेव शाखिनामादित्यव्रतं नास्तीति ॥ १८ ॥

ये चरन्त्येकवाससो भवन्ति ॥ १९ ॥

न वाससां परिवर्तनं कुर्यात् ॥ १९ ॥

न चापोऽभ्युपयन्ति ॥ २१ ॥

स्नानार्थमपि नावगाहनं कुर्युः ॥ २१ ॥

शाक्वरीणां द्वादश नव षट् त्रय इति विकल्पाः ॥ २२ ॥

संवत्सरा इति वर्तन्ते । विकल्पा इति । विविधा एते कल्पा न तुल्या इत्यर्थः । अनेन कालभूयस्त्वेन फलभूयस्त्वं द्योत्यते ॥ २२ ॥

अथ महानाम्निकव्रतिनो नियममाह—

कृष्णवस्त्रः ॥ २३ ॥

कृष्णत्वन्तु वर्णविशेष आर्द्रवस्त्रता वा ॥ २३ ॥

कृष्णभक्षः ॥ २४ ॥

नीरसाहारोऽपक्वाहारो वा ॥ २४ ॥

आचार्याधीनः ॥ २५ ॥

असत्यप्यध्ययने तत्प्रियहितकारी स्यात् ॥ २५ ॥

तपस्वी तिष्ठेद्दिवेति ॥ २६ ॥

आसीत नक्तम् ॥ २७ ॥

स्पष्टे ॥ २६ ॥ २७ ॥

संवत्सरमेकेषां पूर्वैः श्रुताश्चेत् ॥ २८ ॥

यस्य त्रिरात्रादिभिरल्पव्रतैः शाक्वर्योऽधीताः संवत्सरमेव चरेदित्येके मन्यन्ते ॥ २८ ॥

उपोषिताय परिणद्धाक्षायानुगापयेत् ॥ २९ ॥

स्पष्टयो बहुलमिति द्वितीयास्थाने तादर्थ्यवाची चतुर्थी कृता तदर्थानां धर्माणां बाहुल्यं सूचयितुम् । ते च धर्मा निदानकारेणोक्ता आचारसिद्धाश्च वेदितव्यास्तान्वक्ष्यामः—महानाम्न्यध्ययनकाल आचार्यशिष्ययोर्हस्तेनोदकधारणम्, एको वा द्वौ वा गायेतां न बहवः, सकृदृचमुक्त्वा साम च सकृदेव पुरीषपदमुक्त्वा पुनः पादशः सकृद्वृत्त्याऽऽवर्तयेत्, एकस्मिन्दिने व्रतचरणकाले सायं प्रातः स्नानं, पर्यन्ति शरणं

नातीयात्, नात्रोपेक्षा कर्तव्या कृत्स्नवेदतुल्यत्वादस्य साम्नः, व्रतचरणकाले पूर्वेऽहोरात्रे वाग्यत उपवसेत्, प्रागस्तमयादहतेन वाससा चक्षुषी पिधाय रात्रावासीत। अथापरेद्युरुपोषितं परिणद्धाक्षं वाग्यतमुपनयनवच्छ्रेयःपर्यन्तं नीत्वा शक्वरीर्गापयेत्। श्रावयेद्वा श्रवणविधिवचनात्। अनुः सादृश्यार्थः। अध्ययनकालवदुदकधारणमृन्जयश्चेत्यर्थः। प्रतिस्तोत्रीयं पुरीषपदाभ्यासो विशेषः ॥ २९ ॥

यथा मा न प्रधक्ष्यन्तीति तं प्रातरभिवी-
क्षयन्ति यान्यप्रधक्ष्यन्तं मन्यन्तेऽपोऽग्निं
वत्समादित्यम् ॥ ३० ॥

शक्वरीगानानन्तरं यथा वीक्षणे कृते मां दग्धुं न शक्ष्यति माणवक इत्याचार्या मन्यन्ते तथा तं वीक्षयेत्प्रातःकाले। अमीत्यामस्य(?) वीक्षणार्थम्। बहुवचनं गुरुत्वात्पूजनार्थम्। यानि दग्धुमशक्यं मन्यन्ते तानि वीक्षयेत्। कानि पुनस्तानि। अपादीनि ॥ ३० ॥

तेषां वीक्षणमन्त्रान्क्रमश आह—

ज्योतिरभिव्यख्यमित्यग्निं पशूनभि-
व्यख्यमिति वत्सं सुरभि व्यख्य-
मित्यादित्यं विसृजेद्वाचम् ॥ ३१ ॥

वाङ्नियमं त्यजेन्नावश्यं भाषेत ॥ ३१ ॥

गौर्दक्षिणा ॥ ३२ ॥

वीक्षिता गौराचार्याय देया माणवकेन ॥ ३२ ॥

कंसो वासो रुक्मं च ॥ ३३ ॥

कंसपूर्णा आपस्तत्र रुक्मं निधाय वीक्षेत कंसरुक्मयोश्चापिधानार्थं वस्त्रमाचार्याय दद्यात् ॥ ३३ ॥

अनुप्रवचनीयेष्वृचं साम सदसस्पति-
मिति चाऽऽज्यं जुहुयात् ॥ ३४ ॥

प्रवचनात्पश्चात्क्रियत इत्यनुप्रवचनीयहोमः। चकारः समुच्चयार्थ उपनयनविसर्गेऽस्माभिरुक्तानाम्। आज्यमिति प्रतिनिधिवर्जनार्थमलाभेऽपि कालोत्कर्ष एवेति। सावित्रीप्रापणरहस्यविधयो गृह्यशेषे द्रष्टव्याः।

सर्वानुसारेणास्माभिरुपनयनमुक्तम् । अथोक्तेन प्रकारेण गोदानमतमुपाकृत्य तस्मिन्संवत्सरेऽग्न आयाहीत्यादिवर्मीव धृष्णु वा रजेयन्तमृचं मध्याप्य 'ओग्नाये' इत्यादीनि चाऽऽग्नेयैन्द्रपावमानानि पर्वाण्यध्यापयीत । पूर्णे संवत्सर उपनयनविसर्गवद्विसर्गं कुर्यात् । नात्र प्रागुदयादृगमननियमः । वामदेव्येन प्रवेशनिष्क्रमणे । वामदेव्यादिशेषोन्तं सत्त(त्रा)-द्वाविकल्पात्रात्तानि निवर्तन्ते । गायत्रस्य स्थान आग्नेयैन्द्रपावमानानि पर्वाणि श्रावयेत् । अशक्तश्चेत्पर्वाद्यन्तानि सामानि ' सोमं राजानमित एत उद्वारुहन्त्सपूर्व्या महोनाम' इति 'अभि त्रिपृष्ठम्' इति च श्रावयेत् । अनुप्रवचनीये गोदानमतमचारियमिति मन्त्रविकारः ॥ ३४ ॥

अथ व्रातिकमुपनयनवत्सर्वं कुर्यात् ॥ ३५ ॥

तस्मिन्संवत्सर इन्द्रज्येष्ठं न आ भरेत्यादिसुपर्णा इह स्तेयन्तमृच-मध्याप्याकैन्द्रदैवतानि च्छान्दसानि त्रीणि पर्वाण्यध्यापयीत । आदित्यव्रताभावपक्षे शुक्रियपर्वापि श्रावयेत् । पूर्णे संवत्सर उपनयनविसर्गवत्सर्वं कुर्यात् । गायत्रस्थाने छान्दसानि पर्वाणि श्रावयेत् । अशक्तौ गोदानव्रतवद्व्रातिकव्रतमिति मन्त्रविकारः । व्रातिकादित्यव्रतमहानाम्निकौपनिषदेषु नास्ति संहिताहोम इति केचिच्छ्रवणात्पूर्वो होमः । संहिताध्ययनार्थत्वात्संहिताहोम इत्युच्यते । इमं होमं कृत्वाऽऽग्नेयादीनां पर्वणां छान्दसानां शक्वरीणां चाध्ययने संहिताध्ययनमित्युच्यते ॥ ३५ ॥

व्रातिकव्रतानन्तरमादित्यव्रतम् ॥ ३६ ॥

तस्य व्रातिकवदुपाकरणम् । तस्मिन्संवत्सरे शुक्रियाध्यापनम् । तद्(दु)भिः सहोपनयनविसर्गवत्कुर्यात् । गायत्रस्थाने शुक्रियाणि । अशक्तौ पूर्ववदादित्यव्रतमिति मन्त्रविकारः ॥ ३६ ॥

अथ महानाम्निकम् ॥ ३७ ॥

अस्योपनयनवदुपाकरणविसर्गौ महानाम्निकव्रतमिति मन्त्रविकारो गायत्रस्थाने शक्वर्यः । शेषमुक्तम् ॥ ३७ ॥

अथोपनयनवदौपनिषदम् ॥ ३८ ॥

उपनिषद्व्रतमिति मन्त्रविकारः । गायत्रस्थाने देव सवितरित्यादि न

च पुनरावर्तत इत्येवमन्तं स्यात् । कृत्स्नश्रावणाशक्तौ यजुरोंकारादिभ्यः प्राणानामाद्यन्तानि वाक्यानि सोमं राजादीनि च श्रावयेत् ॥ ३८ ॥

अथ ज्येष्ठसामव्रतम् ॥ ३९ ॥

उपनयनवत्सर्वमिति ज्येष्ठसामव्रतमिति मन्त्रविकारः ॥ ३९ ॥

भौतिकव्रतमिति वा ॥ ४० ॥

गायत्रस्थान आज्यदोहादित्रयम् ॥ ४० ॥

अथ ब्रह्मसामव्रतमेवं कुर्यात् ॥ ४१ ॥

रुच्या( च्या )चरणं कालनियमो ब्रह्मसामव्रतमिति मन्त्रविकारः । गायत्रस्थाने तव श्यावीयम् । ऊर्गि, इत्याद्येवमन्तं तव श्यावीयमिति केचित् । इलांदपश्चानुगानमिति केचित् । शास्त्रान्तरस्थमित्यन्ये । गोदानादिचत्वारि वेदव्रतादीनीति गौतमवचनादादित्यव्रतामावपक्ष औपनिषदसंहितानि चत्वारि स्युः । व्रतचतुष्टयपक्षे तूपनयनं सर्वार्थत्वान्न गण्यते व्रतत्वेन । व्रतापेक्षाणां वेदभागानां व्रतकालेऽध्ययनाशक्तौ व्रतकालोत्कर्षः कार्यः । समाप्य वा व्रतमनियतकालमधीयीत । इतरस्य तु वेदभागस्य न कालनियमो वेदाङ्गानाम् ॥ ४१ ॥

अथ प्रकृतमनुसरामः—

चित्ययूपोपस्पर्शनकर्णक्रोशाक्षिवेपनेषु सूर्याभ्युदितः सूर्याभिनिर्मुक्त इन्द्रियैश्च पापस्पर्शैः पुनर्मामित्येताभ्यामाहुतीर्जुहुयात् ॥ ४२ ॥

यूपाग्निचयनयोः कर्मापवर्गादूर्ध्वमुपस्पर्शने दोषोऽस्ति तन्निर्हरणार्थमिदम् । श्रोत्रे शब्दिते वामचक्षुःकम्पने च दुर्निमित्तत्वात्तन्निर्हरणार्थम् । स्वपन्तं सूर्योऽभ्युदियादस्तमियाद्वा तत्र दोषनिर्हरणार्थम् । मनसा निषिद्धे चिन्तिते चक्षुषा निषिद्धे दृष्टे श्रोत्रेण निषिद्धे श्रुते घ्राणेन निषिद्ध आघ्राते वाचा निषिद्धे भाषित एवमिन्द्रियैः पापकृद्भिर्युक्तस्तद्दोषनिर्हरणार्थं जुहुयादाज्यतन्त्रेण परिचरणतन्त्रेण वा । पुनर्मामिति पुनर्मन इति च मन्त्रादिः ॥ ४२ ॥

आज्यालिप्ते वा समिधौ ॥ ४३ ॥

समित्तन्त्रेण ॥ ४३ ॥

जपेद्वा लघुषु जपेद्वा लघुषु ॥ ४४ ॥

अल्पेषु पापेषु । द्विरुक्तिः पटलसमाप्त्यर्था ॥ ४४ ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ द्वितीयपटलस्य
पञ्चमः खण्डः ॥ ५ ॥

अथ तृतीयः पटलः ।
तत्र प्रथमः खण्डः ।

आप्लवने पुरस्तादाचार्यकुलस्य परिव्रत आस्ते ॥ १ ॥

तयोराप्लावनं पूर्वमित्युक्तं तदिदानीं पुरुषस्योच्यते । आप्लवनं स्नानम् । तत्र कर्मन्तरा निर्देशे स्वयमेव सर्वं कुर्यात् । आचार्यगृहस्याग्रे मार्गे प्रावृते देश उदगग्रेषु दर्भेषूपविशेत् ॥ १ ॥

उदङ्मुख आचार्यः प्रागग्रेष्विति ॥ २ ॥

तस्य दक्षिणत उपविशेत् ॥ २ ॥

एवं ब्रह्मवर्चसकामः ॥ ३ ॥

नित्ये कामोऽयमन्योऽयम् ॥ ३ ॥

गोष्ठे पशुकामः ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

सभायां यशस्कामः ॥ ५ ॥

महास्थाने ॥ ५ ॥

सर्वौषधेनापः फाणयेत् ॥ ६ ॥

सर्वैरोषधिफलैर्यथालाभं संयोज्योदकमग्निनाऽपः फाणयेत्तापयेद्वः क्वाथेत् ॥ ६ ॥

सुरभिभिश्च ॥ ७ ॥

सुरभिगन्धिभिश्च संयोजयेदपः ॥ ७ ॥

ताभिः शीतोष्णाभिराचार्योऽभिषिञ्चेत् ॥ ८ ॥

तप्ताभिः शीतोदकसंयुक्ताभिः शिष्यमूर्धन्यवसिञ्चेद्गृह्यपाणप्रकारेण ॥ ८ ॥

स्वयं वा मन्त्राभिवादात् ॥ ९ ॥

मामिति मन्त्रलिङ्गात् ॥ ९ ॥

उभावित्येके ॥ १० ॥

तेनेममित्याचार्यो ब्रूयात् ॥ ११ ॥

तेनाहं माममिषिञ्चामीत्यत्र तेनेममभिषिञ्चामीति ॥ ११ ॥

ये अप्स्वित्यपामञ्जलिमवसिञ्चेत् ॥ १२ ॥

उपनयनवदृक्पः पूरयेत् । भूमाववाञ्चं सिञ्चेदभिषेक्ता ॥ १२ ॥

यदपामिति चेति ॥ १३ ॥

तूष्णीं वेति ॥ १४ ॥

स्पष्टे ॥ १३ ॥ १४ ॥

गोरोचन इति गृह्याऽऽत्मानमभिषिञ्चेत् ॥ १५ ॥

पूर्ववदञ्जलिना पूर्णं गृहीत्वा । गृहीत्पसमासेऽपि बहुलवचनाल्ल्यप्कृतोऽस्य बहुविषयं द्योतयितुम् । अतो गृहीत्वाऽभिषेकः । आत्मानमिति शिष्योपलक्षणार्थम् । अत्राऽऽचार्योऽपि शिष्यमेवाभिषिञ्चेत् ॥ १५ ॥

येन स्रियमिति चेति ॥ १६ ॥

तूष्णीं वेति ॥ १७ ॥

स्पष्टे ॥ १६ ॥ १७ ॥

उद्यन्नित्यादित्यमुपतिष्ठेत् ॥ १८ ॥

*अनार्द्रेण वस्त्रेण परिधायाऽऽचम्योद्गग्रेषु दर्भेषु स्थित उपतिष्ठेच्छिष्यः ॥ १८ ॥*

समस्ये द्वेति ॥ १९ ॥

प्रातर्यावभिरस्यात्सांतपनेभिरस्यात्सायं यावभिरस्याह्वशसनिरसि शतसनिरसि सहस्रसनिरसीति दशसनिं मा कुरु शतसनिं मा कुरु सहस्रसनिं मा कुर्विति समासः ॥ १९ ॥

विहरन्ननुसंहरेच्चक्षुरसीतीति ॥ २० ॥

यथापाठं ब्रुवन्नाविशेत्यस्यानन्तरं चक्षुरसीत्यादि त्रिरनुपज्ज्य ब्रूयात् ॥ २० ॥

उदुत्तममिति मेखलामवमुञ्चेत् ॥ २१ ॥

समासः ॥ २१ ॥

भाश्य वापयेच्छिखावर्जं केशश्मश्रुलोमनखानि ॥ २२ ॥

स्पष्टम् ॥ २२ ॥

अलंकृतोऽहतवाससा श्रीरिति स्रजं प्रतिमुञ्चेत् ॥ २३ ॥

द्वे नवे वस्त्रे परिधाय स्रजं वलयाकृतिं कृत्वा शिरसि प्रतिमुञ्चेत् ॥ २३ ॥

नेत्र्यौ स्थ इत्युपानहौ ॥ २४ ॥

पादयोः प्रतिमुञ्चेत् ॥ २४ ॥

वैदशाच( णव )दण्डमादद्याद्गन्धर्वोऽसीति ॥ २५ ॥

स्मृत्युक्तलक्षणं दण्डं गृह्णीयादित्यर्थः ॥ २५ ॥

उपेत्याऽऽचार्यं परिषदं प्रेक्षेत्यक्षमिवेति ॥ २६ ॥

आचार्यसमीपं गत्वा संसदं पश्येन्मन्त्रेण ॥ २६ ॥

उपविश्यौष्ठापिधानेति मुख्यान्प्राणानभिमृशेत् ॥ २७ ॥

दर्भेषूपविश्य चक्षुषी श्रोत्रे नासिके चाभिमृशेन्मन्त्रेण ॥ २७ ॥

गोयुक्तं रथमालभेद्वनस्पतय इति ॥ २८ ॥

आस्थाता त इत्यारोहेदिति ॥ २९ ॥

प्राचीं प्रयायोदीचीं वा प्रदक्षिणमावर्तयेत् ॥ ३० ॥

स्पष्टानि ॥ २८ ॥ २९ ॥ ३० ॥

प्रत्यायातायार्घ्यमित्येके ॥ ३१ ॥

प्रत्यागताय मधुपर्कं दद्यादाचार्यः ॥ ३१ ॥

उक्तमाप्लवनम् । अत ऊर्ध्वं स्नातकस्य कृतविवाहस्य च साधारणान्धर्मानाह—

वृद्धशीली स्यादत ऊर्ध्वम् ॥ ३२ ॥

दर्पादिपरिवर्जक इत्यर्थः ॥ ३२ ॥

नाजातलोम्न्योपहासमिच्छेत् ॥ ३३ ॥

विवाहादूर्ध्वं मैथुनप्रसक्तावसमर्थया मैथुनं तदर्थां च चेष्टां न कुर्यादित्यर्थः ॥ ३३ ॥

नायुग्वा ॥ ३४ ॥

अस्वास्थ्येनाशक्यादिनाऽयोग्ययोपहासं नेच्छेत्पीडाहेतुत्वात्तस्याः॥३४॥

न रजस्वलया ॥ ३५ ॥

रजस्वलया स्वभार्ययाऽऽस्नानात् ॥ ३५ ॥

न समानर्ष्या ॥ ३६ ॥

समानार्षेयया । अर्थाद्विवाहस्यापि प्रतिषेधः ॥ ३६ ॥

अपरया द्वारा प्रपन्नादिःपक्वपर्युषितानि नाश्नीयात् ॥३७॥

कुद्वारप्रवेशनं यच्च योग्यमेव द्रव्यं पक्वमेव पुनः पच्यते व्रीहिमूलफलादेस्तु संस्कारार्थं द्विःपक्वस्य न प्रतिषेधो यच्च पक्वमुपःकालमस्येति तन्न भुञ्जीत ॥ ३७ ॥

अन्यत्र शाकमांसयवपिष्टविकारेभ्यः ॥ ३८ ॥

द्विःपक्वपर्युषितयोरभ्यनुज्ञा ॥ ३८ ॥

पायसाच्च ॥ ३९ ॥

अन्यत्रेति वर्तते । चकारः पयोविकाराणां च संग्रहार्थः ॥ ३९ ॥

फलप्रचयनोदपानावेक्षणवर्षतिधावनो-

पानत्स्वयंहरणानि न कुर्यात् ॥ ४० ॥

उत्पत्तिस्थाने प्रकीर्णानां फलानां संचीकरणं प्रचयनं कूपादाववाङ्मुखवेक्षणं वर्षति सति तद्देशोद्धावनं स्वयोरुपानहोर्हस्तादिना धारणम् । रज्ज्वादिव्यवधाने न दोषः ॥ ४० ॥

नागन्धां स्रजं धारयेन्न चेद्धिरण्यस्रक् ॥ ४१ ॥

स्पष्टम् ॥ ४१ ॥

भद्रमिति न वृथा व्याहरेत् ॥ ४२ ॥

भद्रमित्यकारणं न वदेत् । उक्ता नियमाः ॥ ४२ ॥

पुष्टिकामो गाः प्रकालयेतेमा म इति ॥ ४३ ॥

पशुवृद्धिकामो गाः प्रातर्गृहान्निर्गमयेत् ॥ ४३ ॥

प्रत्यागता इमा मधुमतीरिति ॥ ४४ ॥

सायं प्रत्यागता अभिमन्त्रयेत । अयमेकः कल्पः ॥ ४४ ॥

अथापरः—

पुष्टिकाम एव प्रथमजातस्य वत्सस्य प्राङ्मातुः प्रलेहनात्ललाटमुल्लिह्य निगिरेद्गवामिती‍ति ॥ ४५ ॥

संवत्सरे पूर्णे जातस्य ॥ ४५ ॥

संप्रजातासु गोष्ठे निशायां विलयनं न जुहुयात्संग्रहेणेति ॥ ४६ ॥

सर्वासु संप्रजातासु सायमाहुत्यनन्तरमाज्यतन्त्रेण । अयमप्येकः ॥ ४६ ॥

अथापरं पुष्टिकामस्यैव—

अथापरं वत्समिथुनयोः कर्णे लक्षणं कुर्याद्भुवनमिति ॥ ४७ ॥

पुंसः स्त्रियाश्च कर्णेषु चिन्हार्थं छेदनं कुर्यात्स्वधितिना ॥ ४७ ॥

पुंसोऽग्रे ॥ ४८ ॥

प्रथममित्यर्थः ॥ ४८ ॥

लोहितेनेत्यनुमन्त्रयेत ॥ ४९ ॥

तूष्णीमन्यासामपि लक्षणं कृत्वा सर्वा एवानुमन्त्रयेत ॥ ४९ ॥

तन्तीं प्रसारिताभिपतन्तीम् ॥ ५० ॥

निर्गतासु गोष्ठे बन्धनार्थरज्जुमभिमन्त्रयेत । अयमेकः कल्पः । एते कल्पा अहरहः फलसिद्धेः कार्याः ॥ ५० ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ तृतीयपटलस्य प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयः खण्डः ।

---

श्रावण्यां पौर्णमास्यां गृहादग्निमतिप्रणीय प्रतिदिशमुपलिम्पेदाधिके प्रक्रमे ॥ १ ॥

श्रावण्यामित्येव सिद्धे पौर्णमास्यामित्यन्यत्रापि श्रावणीग्रहणे पौर्ण-

मास्यर्धं श्रावणीमित्येक इत्यत्र । इतरथा हि हस्ते स्यात् । प्रकृतत्वादु-पवसथ्येऽहनि पूर्वाह्णे पञ्चदश्यामेतत्कुर्यात् । यदि पूर्वाह्णे पञ्चदशी न विद्यते यजनीयेऽहनीदं कृत्वा पौर्णमासं कुर्यात् । एवमुत्तरेष्वपि कर्मसु निर्वापशून्यं तण्डुलान्गृह्याग्नौ भर्जितान्कृत्वा तान्निधायार्धं सक्तून्कृत्वौप्य शूर्पेणाग्रेस्तरतो दर्भेषु शूर्पमुदकपूर्णं पात्रमन्यच्चोदकपात्रं दर्वीं दर्भ-स्तम्बं च निधाय गृह्याग्नेः पुरस्ताद्द्विपदमतीत्याग्नेर्दक्षिणतो गत्वाऽभ्यु-क्षणान्तं कृत्वा गृह्याग्नेरेकदेशं प्रणीय तत्र निधाय तस्याः प्रतिदिशमे-कपदमतीत्य प्रागुपक्रमं प्रदक्षिणं गोमयेनोपलिम्पेत् ॥ १ ॥

सकृद्गृहीतान्सक्तून्दर्व्यां कृत्वा पूर्वोपलिप्ते निनी-
यापोऽपः प्राच्यामिति बलिं निर्वपेत् ॥ २ ॥

दक्षिणपश्चिमयोरुपलिप्तस्थानयोरन्तरुपविश्य पूर्णपात्रात्पात्रान्तरे किंचिदुदकं निनीय तदर्धं पूर्वस्मिन्नुपलिप्तस्थाने पाणिनाऽऽसिच्य तेनैव पाणिना दर्व्यां सक्तून्निधायोपलिप्तस्थाने दर्व्या सक्तून्निदध्यात् ॥ २ ॥

निनयेदपां शेषम् ॥ ३ ॥

शिष्टमर्थम् ॥ ३ ॥

अप उपस्पृश्यैवं प्रतिदिशं यथालिङ्गम् ॥ ४ ॥

पाणी प्रक्षाल्य यथालिङ्गं मन्त्राः ॥ ४ ॥

दक्षिणपश्चिमोत्तरेणाग्निं च संचरः ॥ ५ ॥

दक्षिणस्योपलिप्तस्याग्नेश्चान्तरेण पाणिं प्रसार्य पूर्ववत्कुर्यात् । पश्चि-मस्याग्नेश्चान्तरेणोत्तरेण । अनतिप्रणीतस्योत्तर एव द्रव्याणि स्युः । तद्देशाद्यावद्यदानार्थमेवोपादायोपादाय बलिकर्म ॥ ५ ॥

शूर्पेण शिष्टानग्रावोप्यातिप्रणीतादनतिप्रणी-
तस्योर्ध्वं न्यञ्चौ पाणी कृत्वा नमः
पृथिव्या इति जपेत् ॥ ६ ॥

निनात्यन्तमपस्त्वात्मानं तथा तेषामेव यावस्तद्दर्थो विधीयत इति युक्तमभिधातुं सर्वान्सक्तूनतिप्रणीताग्नावोप्यानतिप्रणीतस्य पश्चात्स्व-स्थानं गत्वोपविश्यायाञ्चौ पाणी भूमौ निधाय जपेत् । तत उत्थाय,

सोमो राजेति दर्भस्तम्बमुपस्थाय स्तम्बस्थानास्सर्वात्मना साध्वां सायं संध्यामिति नमस्कुर्यान्मन्त्रलिङ्गात् । अतः परं प्रणीतस्य लौकिकत्वम् ॥ ६ ॥

अक्षतानादाय प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य जुहुयात् । अञ्जलिना हये राक इति चतसृभिरिति निहितान्गृहं च गृहीत्वाऽभ्युक्षणान्तं कृत्वाऽग्निं निधाय परिचरणतन्त्रेणाविच्छिन्नाङ्गुल्यग्रैर्जुहुयादाहुतिमन्त्रं प्रागुपक्रम्य जपेद्वसुवन एधीति त्रिभिः प्रतिदिशमवान्तरदेशेषु च ॥ ७ ॥

होमं समाप्योत्तरतोऽग्नेः प्राचीं गत्वा प्रागुपक्रमप्रदक्षिणमग्नेरदिक्षु तिष्ठन्नन्यभिमुखस्त्रिस्त्रिर्ब्रूयात् ॥ ७ ॥

ऊर्ध्वं प्रेक्षन्देवजनेभ्यः ॥ ८ ॥

वसुवन एधीति ब्रूयात् ॥ ८ ॥

तिर्यङ्ङितरजनेभ्यः ॥ ९ ॥

तिर्यङ्प्रेक्षन्देवजनशिष्टेभ्यस्त्रिर्ब्रूयात् ॥ ९ ॥

अवाङ्प्रेक्षन्प्रत्येत्यानवेक्षन्नक्षतान्प्राश्नीयात् ॥ १० ॥

होमशिष्टानग्निं च गृहीत्वा नान्यवचित्तो गृहं प्रत्यागम्य प्रक्षयेत् ॥ १० ॥

प्रोभूतेऽक्षतसक्तून्कृत्वा नवे पात्रे निधायास्तमिते बलिं हरेदाग्रहायण्याः ॥ ११ ॥

पूर्ववत्प्रातःसक्तूकरणं नाधं निधानं सायं होमानन्तरं पूर्ववदेव प्रतिदिशं बलिनिधानं शूर्पावनपर्यन्तमा मार्गशीर्षपौर्णमास्याः ॥ ११ ॥

प्रोष्ठपदीं हस्तेनाध्यायानुपाकुर्युः ॥ १२ ॥

प्रोष्ठपदे मासे हस्तेन युक्ते कालेऽध्यायान्वेदमागांस्तदङ्गानि चोपविष्टाः संहता आचार्यः शिष्याश्च । नोपनयनादिवत्पृथक् । आरम्भार्थे । तत्राऽऽदावादौ कुर्युरधीयीरन्निति वक्ष्यमाणेन प्रकारेण । प्रोष्ठपदे हस्त इति वक्त[व्ये] बहुन्यथोक्तमन्यदपि बहुस्मृतिसमाचारसिद्धमात्रं

कर्तव्यमिति सूचयितुम् । तदुच्यते—यद्यस्मिन्मासि हस्तद्वयसंभवे पूर्वस्मिन्हस्ते कुर्यात् । नात्र पूर्वाह्णनियमः । प्रोष्ठपदीमिति सप्तम्यर्थे द्वितीया । तस्याः कृत्स्नसंयोगार्थत्वात् । अर्धपञ्चमासानधीत्य पौषीमुत्सर्ग इति वचनात्पूर्वपक्षसंभवाच्च । पूर्वपक्षस्य प्रोष्ठपद्याः पौर्णमास्याः संनिकृष्टत्वाच्च पूर्वस्मिन्हस्त इति । पञ्चगव्यमपामार्गं संपूर्णं दूर्वास्तैलमामलकपिष्टं हरिद्राकल्कं तिलानक्षतान्पात्राणि पुष्पाणि फलानि मूलानि वन्यानि धूपं दीपं गन्धमग्निं यज्ञोपवीतं दर्भांश्चाऽऽदाय नदीं गत्वा तदलाभे यथालाभं महोदकं शुद्धजलतटाकं गत्वा शिष्यैः सह हर्षमाणा नाभिमात्रे सकृत्प्रगाह्याप आचम्य पञ्चगव्यं प्राश्य त्रिरेवं प्रगाह्य नैत्यं कर्म समाप्योत्सर्जनं कर्म करिष्य इति संकल्प्य तीर्थं प्रक्षाल्यार्कपत्रेषूदगग्रेषु दर्भेषु वसिष्ठादीनां सप्तर्षीणामेकां पङ्क्तिं पांसुपिण्डैः प्रकल्प्य तत्पुरस्तात्तथैव राणायन्यादीनाचार्यांस्त्रयोदश शाट्यादीन्प्रवचनकर्तॄंश्च दश पङ्क्तिद्वयं प्रकल्प्य गङ्गादिषु वसन्तीनां देवतानां नवानामेकां पङ्क्तिं प्रकल्प्य ब्रह्माणं वायुं मृत्युं वैश्रवणं काश्यपमग्निमिन्द्रं प्रजापतिमेकां पङ्क्तिं वंशानुसारेणैकां पङ्क्तिं प्रकल्प्य साध्यानां मरुतां विश्वेषां देवानामष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्च त्रयस्त्रिंश इत्येतेषां चतुर्णां गणानामर्थे प्रतिगणं त्रींस्त्रीन्सर्वानेकां पङ्क्तिं प्रकल्प्य मध्यमयोः पङ्क्त्योर्दक्षिणाग्रेषु दर्भेषु पात्रेषु दक्षिणापवर्गांस्त्रीन्पित्रादीनेकां पङ्क्तिं प्रकल्प्य सर्वान्वसिष्ठादींस्तत्राऽऽवाह्य संनिहितान्ध्यात्वा तेभ्यः स्वेषु स्वेषु पात्रेषु पवित्रमासनार्थं निधायाभ्यञ्जनाय तैलं निधाय शरीरपरिमार्जनार्थमपामार्गपिष्टं दत्त्वा केशप्रक्षालनार्थमामलकपिष्टं दत्त्वा आपस्तरत्स्व यः पावमानीः शुद्धवत्यः सोमं राजा यत इन्द्र महाजज्ञा पवित्रं त इत्यृक्सामभिश्च स्नापनं कृत्वाऽऽचमनार्थमुदकं दत्त्वा वस्त्रं प्रदाय पुनराचमनं दत्त्वा यज्ञोपवीतं दत्त्वाऽक्षतपुष्पमुदकं दत्त्वा पितृभ्यस्तु तिलमिश्रं दद्यात् । गन्धद्वारामिति हरिद्राकल्कयुक्तं गन्धं दत्त्वेन्द्रेति धूपं पावमान इति दीपमर्चन्त्यर्चताऽर्चन्ति गायन्ति त्वा प्रगायेति पुष्पाणि दद्युः । तत आचमनार्थमुदकं दत्त्वा भोजनार्थं फलानि मूलानि वन्यानि दद्युः । पुनश्चोदकम् । अतो दर्भाक्षतान्पात्रेषु कृत्वा देवान्यथापूर्वमित्यादिवंशं च ब्रुवन्तस्तैस्तैस्तीर्थैरमुष्मा अमुष्मायिदमुदकं तृप्यतेऽस्त्विति ध्यायन्तस्तर्पयेयुः प्रतिनाम । पितॄणां चाक्षतस्थाने तिलाः । पित्र्यं सर्वं

प्राचीनावीतिनः कुर्युः । एवमृषीणां ( देवादीनां ) सर्वं कृत्वा पश्चात्पितॄणां संमार्जनादिभोजनपर्यन्तं सर्वं मन्त्रवदेव कृत्वा पश्चात्तर्पणं कर्तव्यम् । देवं सर्वं यज्ञोपवीतिनः कुर्युः । आर्षं सर्वं निवीतिनः । पित्र्यं सर्वं प्राचीनावीतिनः । ततो देवर्षिपितॄणामुद्वासनं कृत्वा तानाछोक्यावभृथसाम गायन्तः पांसुभिरात्मानमभ्युक्ष्यापोऽभ्युपेयुः । एतदुत्सर्जनं नाम । ततो गृहं गत्वा यथासंभवमलंकुर्युः । तथाऽऽचार्य उपाकर्म करिष्य इति संकल्प्य कृत्वेऽग्नौ यज्ञोपवेशनान्तं कृत्वा सप्तर्वा(?)न्सप्तर्षीन्संकल्प्योदकपूर्णे कलशे सादयेत् । चतुरो वेदानेके सादयन्ति सर्वे स्नानाद्यर्चनपर्यन्तं पूर्ववत्कुर्युः ॥ १२ ॥

अथ प्रकृतमनुसरामः—

श्रावणीमित्येके ॥ १३ ॥

श्रावण्यां पौर्णमास्याम् ॥ १३ ॥

हुत्वोपनयनवत् ॥ १४ ॥

स्तरणादि कृत्वा समस्तान्ताभिर्होमः । नात्राग्ने व्रतपत इत्यादीन्यर्थलोपात् । शिष्यास्तु संनिहिता एव भवेयुः । नात्रान्वारम्भः । अतः संस्कारत्वात् । अथ होमसमापनम् । ततो यज्ञोपवीतमेखले नवे ग्राह्ये शिष्यैः ॥ १४ ॥

तत आह—

सावित्रीमनुवाचयेत् ॥ १५ ॥

वाचयेदिति सिद्धेऽन्विति सावित्र्याः पश्चादृच्यपनयाचनार्थम् । किं तदनुवाच्यमित्याकाङ्क्षायामुपनयनवदित्यस्यापि सूत्रस्य शेष इति विज्ञायते । अतः पच्छोऽर्धर्चशः सर्वामेकैकशो व्याहृतीनामोंकारस्य च वाचनं शिष्याणाम् ॥ १५ ॥

सोमं राजानं पर्वादींश्च ॥ १६ ॥

ऋक्सामनी नियमतो यत्राध्येतारो निरुच्छ्वासमुक्त्वा विरमन्ति । चिरकालं तावदेकं पर्वाग्न आयाहि तद्वो उच्चात इन्द्रज्येष्ठमुपास्मा इत्येकैकामृचं वाचयेत् । ' ओऽग्राइ तद्वो हो व उच्चा ' इत्येकैकं साम यद्वायप्राणवाचोव्रतशुक्रियाद्यशक्वरीसामानि पश्चोहे सप्त स्तोत्रियाः । तथा रहस्ये ब्राह्मणे पर्वाध्यानि वाक्यानि यावदेकार्था[नि] षड्विंशसामविधावार्षेये देवताध्याये वाऽऽध्यानि वाक्यानि देवसवितरोमित्येत-

दसौ चाऽऽदित्यो यो ह वै ज्येष्ठमित्युपनिषदि संहिते वंशे चाऽऽद्ये वाक्ये । चकाराद्वेदाङ्गानि लक्षणानि यथागमम् ॥ १६ ॥

धाना दधि च प्राश्नीयुरभिरूपाभ्याम् ॥ १७ ॥

धानावन्तमिति धाना आचम्य दधि क्राव्ण इति दधीनि चकारात्पायसमुत्तरघृतमश्नीयुः । अत्र पूर्वाह्ने नास्तीत्युपदेशः ॥ १७ ॥

इत्युपाकर्म ।

श्वोभूते प्रातरधीयीरञ्शिष्येभ्यः ॥ १८ ॥

श्वोभूते पूर्वाह्ण एव स्नात्वाऽलंकुर्युः । पूर्ववदृषीणां स्नानाद्यर्चनपर्यन्तं कृत्वा सावित्र्यादीनि पूर्वोक्तानि ब्रूयादाचार्यः शिष्येभ्यः । पूजार्थं बहुवचनम् ॥ १८ ॥

अनुवाक्याः कुर्युर्ऋगादिभिः प्रस्तावैश्च ॥ १९ ॥

ऋक्षु पादमात्रैः प्रस्तारमात्रैः सामसु सावित्री सोमं राजानं कृत्स्न एव । चकारादनर्थार्थवाक्यमात्रैर्ब्राह्मणादिषु यथानुवचनीयशिष्यास्तथा कुर्युराचार्यः[श्च] ॥ १९ ॥

अनुगायनं रहस्यानाम् ॥ २० ॥

इतः प्रभृत्यारण्यानामध्ययनान्निवृत्तिरोत्सर्जनात् ॥ २० ॥

विद्युत्स्तनयित्नुवर्जम् ॥ २१ ॥

उपाकर्मप्रभृति प्रागुत्सर्जनात्प्रातःसंध्यायां विद्युत्स्तनयित्नौ दिवाऽनध्यायः सायंसंध्यायां रात्रौ । तथाऽऽह मनुः—

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने ।
सज्योतिः स्यादनध्यायः शेषं रात्रौ यथा दिवा । इति ।

यावच्छम्या प्राप्तं रोहितादिरोहिताद्विवर्णा वा गतिर्यावती विद्यते भवति तदाऽनध्याय इत्यापस्तम्ब इति ॥ २१ ॥

अर्धपञ्चममासानधीत्य पौषीमुत्सर्गः ॥ २२ ॥

अर्धः पञ्चमो मासो येषां तेऽर्धपञ्चममासाः । अर्धाधिकाश्चतुरः । पुष्येण युक्तायां पौर्णमास्यां पूर्वोक्तमुत्सर्जनं कुर्युः । अर्धपञ्चममासानितिवचनात् । प्रोष्ठपदे मासे हस्तद्वयसंभवे पूर्वहस्त उपाकरणम् । श्रावण्यामप्युपाकरणे पौष्यामेवोत्सर्गः ॥ २२ ॥

तत ऊर्ध्वमभ्रानध्यायः ॥ २३ ॥

वर्षसमर्था मेघा यदा दृश्यन्ते तदाऽनध्यायो भवति ॥ २३ ॥

विद्युत्स्तनयित्नुपृषितेषु च ॥ २४ ॥

संध्यायामेतेष्वाकालिकमनध्यायः । तथाऽऽह गौतमः—स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निष्विति । पृषितो वर्षः । चकारः स्मृत्यन्तरोक्तानध्यायसंग्रहार्थः ॥ २४ ॥

त्रिसंनिपाते त्रिसंध्यम् ॥ २५ ॥

प्रातःसंध्यायां त्रयाणां संनिपाते तदहोरात्रमुत्तरं चाहरनध्यायः । सायंसंध्यायां सा रात्रिरुत्तरश्चाहोरात्रः ॥ २५ ॥

अष्टकाममावास्यायां चातुर्मास्योरुदगयने

च पक्षिणीं रात्रिम् ॥ २६ ॥

माघमासे कृष्णाष्टम्यष्टकाश्चतुर्षु मासेषु मघाः पौर्णमास्यश्चातुर्मास्या वर्षासु शरत्सु च याः । चकाराद्दक्षिणायने चाष्टका अमावास्या । चातुर्मासीष्वेकमहोरात्रमुत्तरं चाहरनध्यायः । अयनयोस्तु द्विधा चेत्संक्रमणमहरुभयतश्चाहनी । रात्रिग्रहणमष्टकादिषु पूर्वरात्रवर्जनार्थम् । केचिद्द्विधासंक्रमणे च यत्रात्रिसंनिधौ संक्रमणं तामुभयतोऽहःसहितामाहू रात्रिग्रहणात् ॥ २६ ॥

सब्रह्मचारिणि च प्रेत इति ॥ २७ ॥

स्वाचार्येणोपनीते प्रेते मृते ततःप्रभृतिकालत्रयमनध्यायः । चकारान्मातुलादिषु ॥ २७ ॥

उल्कापाते भूमिचाले ज्योतिषोश्चोपसर्गे

एतेष्वाकालिकं विद्यात् ॥ २८ ॥

ज्योतिषोः सूर्याचन्द्रमसोर्ग्रहणे चकारादृत्यर्के च स्वनौ । विद्यादिति स्मृत्यन्तरोक्तसंग्रहार्थम् ॥ २८ ॥

काण्वां तु कठकौथुमाः ॥ २९ ॥

श्वभ्रेषु यावति वर्ष उदकं तिष्ठति तावति संध्यायां वर्षे सति कठाः कौथुमाश्चानध्यायमाहुर्न वर्षमात्रेण ॥ २९ ॥

इति भद्रस्कन्दकृतायां गृह्यवृत्तौ तृतीयपटलस्य
द्वितीयः खण्डः ॥ २ ॥

अथ तृतीयः खण्डः।

आश्वयुज्यां रुद्राय पायसः ॥ १ ॥

आश्वयुज्यां पौर्णमास्यां रुद्राय त्वा जुष्टं निर्वपामीति निर्वापः। चरुतन्त्रमेतत् ॥ १ ॥

मा नस्तोक इति जुहुयात् ॥ २ ॥

प्रधानाहुतिः ॥ २ ॥

पयस्यवनयेदाज्यं तत्पृषोदकम् ॥ ३ ॥

समाप्य होममवनयेत्। आज्यसंयुक्तस्य पयसः पृषोदकमिति नाम ॥ ३ ॥

तेनाभ्यागता गा उक्षेदा नो मित्रावरुणेति ॥ ४ ॥

सायमागताः ॥ ४ ॥

वत्सांश्च मातृभिः सह वासयेत् ॥ ५ ॥

तां रात्रिम् ॥ ५ ॥

नवयज्ञे पायस ऐन्द्राग्नः ॥ ६ ॥

तत्कालपक्वैः सस्यैः साध्यो होमो नवयज्ञः। अहुत्वा तु नवैर्न भोक्तव्यम्। शाकादीनां तु न निषेधः। शाखान्तरात्कालद्रव्यावगतिः। शरदि पौर्णमास्याममावास्यायां वा व्रीहिभिर्वसन्ते यवैः। इन्द्राग्निभ्यां त्वा जुष्टं निर्वपामीति निर्वापः। इन्द्राग्निभ्यां स्वाहेति प्रधानाहुतिः। चरुतन्त्रमेतत् ॥ ६ ॥

शतायुधायेति चतसृभिराज्यं जुहुयादुपरिष्टात् ॥ ७ ॥

प्रधानाहुतेरुपरिष्टात् ॥ ७ ॥

अग्निः प्राश्नात्विति ॥ ८ ॥

अनेनाप्याज्यं जुहुयात् ॥ ८ ॥

अथ स्विष्टकृदादि—

तस्य शेषं प्राश्नीयुर्यावन्त उपेताः ॥ ९ ॥

यज्ञवास्त्वनन्तरं तस्य पायसस्योपेता उपनीताः स्वभृत्याः स्वयं च ॥ ९ ॥

उपस्तीर्यापो द्विर्नवस्यावद्येत् ॥ १० ॥

भोजनार्थे पात्रे ॥ १० ॥

त्रिर्भृगूणाम् ॥ ११ ॥

पञ्चावत्तीनाम् ॥ ११ ॥

अपां चोपरिष्टात् ॥ १२ ॥

अवत्तस्यैवोपर्यपाञ्जलिनयेत् ॥ १२ ॥

भद्रान्न इत्यसंस्वादमगिरोऽग्निश्चिरिति(?) ॥ १३ ॥

पाणिना प्राशनम् । मन्त्रस्यापि त्रिरावृत्तिः । नान्तराचमनम् । अविवक्षितमेकवचनम् ॥ १३ ॥

एतमु त्यमिति वा यवानाम् ॥ १४ ॥

अयं वा यवानां प्राशनमन्त्रः पूर्वो वा ॥ १४ ॥

अमोऽसीति मुख्यान्प्राणानभिमृशेत् ॥ १५ ॥

आचम्य चक्षुषी नासिके श्रोत्रे चाभिमृशेत् । अथ शिष्टमुदगुद्वास्य ब्राह्मणे दत्त्वा दक्षिणां दद्यात् ॥ १५ ॥

आग्रहायणं कर्म श्रावणेनैव व्याख्यातम् ॥ १६ ॥

मार्गशीर्षपौर्णमास्यां मार्जनादिप्राशनान्तं पूर्वाह्णे कुर्यात् । उपवसथ्येऽहनि ॥ १६ ॥

नमः पृथिव्या इति जपेत् ॥ १७ ॥

मन्त्रत्रयस्य प्रतिषेधः ॥ १७ ॥

प्रदोषे पायसस्य जुहुयात्प्रथमेति ॥ १८ ॥

तस्मिन्नेव दिने रात्र्यामाग्रयाणे हव्यवाहाय त्वा जुष्टं निर्वपामीति निर्वापः । सर्वत्र केवलमन्त्रनिर्देशे तूष्णीं निर्वाप इति केचित् । मन्त्रेण प्रधानाहुतिः । चरुतन्त्रमेतत् ॥ १८ ॥

न्यञ्चौ पाणी कृत्वा प्रतिक्षत्र इति जपेत् ॥ १९ ॥

होमं समाप्य जपेद्भूमिगतन्यञ्चौ पाणी कृत्वा ॥ १९ ॥

पश्चादग्नेः स्वस्तरमुदगग्रैस्तृणैरुदक्प्रवणमास्तीर्य तस्मिन्नास्तरणे गृहपतिरास्ते ॥ २० ॥

स्वस्तरमिति कर्मनाम ॥ २० ॥

अनुपूर्वमितरे ॥ २१ ॥

सर्वे मृत्याः क्रमेणोत्तरतः स्वस्तरेण वाऽऽसते ॥ २१ ॥

अनन्तरा भार्या पुत्राश्च ॥ २२ ॥

भार्याऽनन्तराः पुत्राः । चकारात्पुत्रानन्तरमितर इत्येके ॥ २२ ॥

न्यञ्चौ पाणी कृत्वा स्योनेति गृहपतिर्जपेत् ॥ २३ ॥

भूमिगतौ कृत्वा ॥ २३ ॥

समाप्तायां दक्षिणैः पार्श्वैः संवि-
शेयुस्त्रिस्त्रिरध्यात्ममावृत्य ॥ २४ ॥

स्योनेत्यृचि समाप्तायां प्राक्शिरसः संविशेयुः ॥ २४ ॥

स्वस्त्ययनानि कुर्युः ॥ २५ ॥

आशीर्वाद आशीर्वचनानि ॥ २५ ॥

ततो यथार्थं स्यात् ॥ २६ ॥

तत एव यथार्थं न पूर्वम् । आग्रहायणमित्यारभ्यैक एवासौ प्रयोग इत्यर्थः ॥ २६ ॥

ऊर्ध्वमाग्रहायण्यास्तिस्रस्तामिस्राष्ट-
म्योऽष्टका इत्याचक्षते ॥ २७ ॥

अपरपक्षाष्टम्यः ॥ २७ ॥

तासु स्थालीपाकाः ॥ २८ ॥

एकस्यामेकः ॥ २८ ॥

अष्टौ चापूपाः प्रथमायाम् ॥ २९ ॥

स्पष्टम् ॥ २९ ॥

तानि परिवर्तयन्कपाले श्रपयेत् ॥ ३० ॥

अष्टकायै त्वा जुष्टं निर्वपामीति निरुप्य विभज्यार्धं स्थालीपाकार्थं चरुस्थाल्यां निधायापरं चार्धमष्टावपूपान्कृत्वैकस्मिन्कपाले युगपच्छ्र-पयेत् ॥ ३० ॥

उत्तमायां शाकमन्वाहार्यं ॥ ३१ ॥

उपदंशार्थं ब्राह्मणभोजने न(?) दद्यात् ॥ ३१ ॥

अष्टकायै स्वाहेति जुहुयात् ॥ ३२ ॥

प्रधानाहुतिश्चतन्त्रमेतत् । चरोरपूपेभ्यश्च किंचित्किंचिदादाय स्विष्टकृदर्थं संहतमेकैकमवदानम् । उत्तमायां चरुरेव हविः । समानमितरत् । मध्यमायां तु विशेषं वक्ष्यति ॥ ३२ ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ तृतीयपटलस्य
तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थः खण्डः ।

---

मध्यमायां गौः ॥ १ ॥

स्थालीपाकेन समुच्चयः । चरुमपणवर्जमाज्यसंस्कारान्तं कुर्यात्॥ १ ॥

तत आह—

तां पुरस्तादग्नेः प्रत्यङ्मुखीमवस्थाप्य
जुहुयाद्यः पशव इति ॥ २ ॥

स्पष्टम् ॥ २ ॥

हुत्वा वाऽनुमन्त्रयेतानु त्वेति ॥ ३ ॥

व्याहृतिमिश्च हुत्वा पशुमनुमन्त्रयेत ॥ ३ ॥

यवमतीभिरद्भिः प्रोक्षेदष्टकायै त्वा जुष्टं प्रोक्षामीति ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

प्रोक्ष्योल्मुकेन परिहृत्य प्रोक्षणीं पाययेत् ॥ ५ ॥

तूष्णीं च प्रोक्ष्य गृहाग्न्युल्मुकेन पशुं प्रदक्षिणं परिचार्य प्रोक्षणशेषं पाययेत् पशुमुल्मुकमग्नौ विसृजेत ॥ ५ ॥

उदङ्ङुत्सृप्य प्रत्यक्शिरसीमुदक्पादीं संज्ञपयेत् ॥ ६ ॥

शमिता ॥ ६ ॥

संज्ञप्तायां जुहुयाद्यत्पशुर्मायुमकृतेति ॥ ७ ॥

गृहपतिः ॥ ७ ॥

तस्याः पत्नी स्रोतांसि प्रक्षालयेत् ॥ ८ ॥

स्पष्टम् ॥ ८ ॥

पवित्रे अन्तर्धायोत्कृत्य वपामुद्धारयेदिति ॥ ९ ॥

शमिता ॥ ९ ॥

यज्ञियस्य वृक्षस्य विशाखाशाखाभ्यां परिगृह्याग्नौ श्रपयेत् ॥१०॥

गृहपतिः ॥ १० ॥

प्रसृतायां विशसेच्छमिता ॥ ११ ॥

यदा श्रपणाद्वपायां प्रस्रवेद्धारि तस्मिन्काले शमिता ॥ ११ ॥

उक्तमुपस्तरणाभिघारणं यथा स्विष्टकृतः ॥ १२ ॥

स्पष्टम् ॥ १२ ॥

अष्टकायै स्वाहेति जुहुयात् ॥ १३ ॥

स्पष्टम् ॥ १३ ॥

सर्वाङ्गेभ्योऽवदानान्युद्धारयेत् ॥ १४ ॥

हृदयजिह्वावक्षःशकृत्पक्षद्वयसव्यबाहुपार्श्वद्वयदक्षिणश्रोणिगुह्येभ्य एकादशाङ्गेभ्य आहुतिमात्रमुद्धारयेच्छमिता ॥ १४ ॥

न सव्यात्सक्थ्नो न क्लोम्नः सव्यं सक्थि निधाय ॥ १५ ॥

अन्वष्टक्यार्थम् ॥ १५ ॥

पृथङ्मेक्षणान्यवदानानि स्थालीपाकं च श्रपयित्वा ॥ १६ ॥

अवदानानां कुम्भ्यां श्रपणं चरोस्तूष्णीं निर्वापः । श्रपयित्वाऽवदानानि स्थालीपाकं चाभिघार्योदगुद्वास्य प्रत्यभिधार्य बर्हिषि कंसप्लक्षशाखाश्चैकादश सादयेत् ॥ १६ ॥

तत आह—

कंसे रसं प्रस्राव्य ॥ १७ ॥

अवदानरसम् ॥ १७ ॥

प्लक्षशाखास्ववदानानि कृत्वा ॥ १८ ॥

हृदयाद्येकादशाङ्गानि निधाय ॥ १८ ॥

एकैकस्मात्कंसेऽवद्येदिति ॥ १९ ॥

कंसस्थे रसे प्रत्येकं मध्यात्पुरस्ताच्च ॥ १९ ॥

स्थालीपाकाच्च ॥ २० ॥

स्पष्टम् ॥ २० ॥

अथ परिषेकाद्याज्यभागान्तं तत आह—

चतुर्गृहीतमष्टगृहीतं वाऽत्र जुहुयादष्टाविंशतीति ॥ २१ ॥

द्वाविंशतिः पञ्चावदानानि तेषां चत्वार्यष्टौ वा चर्ववदानरसमिश्राणि गृहीत्वा जुहुयात् । अत्रेत्युपस्तरणाभिघारणप्रतिषेधार्थमत्रैव गृहीत्वा जुहुयान्नान्यत इति ॥ २१ ॥

कंसात्पराभिर्द्वाभ्यां द्वाभ्यामेकैकामाहुतिम् ॥ २२ ॥

कंसादेव गृहीत्वा पराभिर्अग्निमीळेऽलूनलता इत्यादिभिः षड्भिर्द्वाभ्यामेकैकामाहुतिं पञ्चावदानाभ्यां चर्ववदानमिश्राभ्यां जुह्वा जुहुयात् ॥ २२ ॥

सौविष्टकृतीमष्टम्या ॥ २३ ॥

कंसे यच्छिष्टं तेनाग्निमं नो अनुमतिस्विष्टकृत्स्थानायष्टं जुहुयात् । अतो न स्विष्टकृदनन्तरमुपरिष्टाद्धोमादि ॥ २३ ॥

वह वपामिति पित्र्ये वपाहोम इति ॥ २४ ॥

पितृदैवत्ये ॥ २४ ॥

जातवेद इति दैवत्ये तदादेशमना-

म्नाते यथाऽष्टकाया इति ॥ २५ ॥

स्पष्टम् ॥ २५ ॥

पशुरेव पशोर्दक्षिणा ॥ २६ ॥

एवकार उपलक्षणतुल्यार्थः ॥ २६ ॥

स्थालीपाकस्य पूर्णपात्रम् ॥ २७ ॥

अत्र पशोरसाहनिवृत्त्यर्थं चरुतन्त्रप्र[कृ]तिरयं होमः ॥ २७ ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ तृतीयपटलस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमः खण्डः ।

---

नवमीं दशमीं वाऽन्वष्टक्यम् ॥ १ ॥

द्वितीयाऽत्यन्तसंयोगार्था पूर्वाह्णव्यतिरेकाधानाहुते च । पूर्वाह्णेऽपे-
क्षयाऽऽदपराह्णनियमः । पित्र्यं च पिण्डदानप्रधानत्वात्प्राचीनावीती

कुर्यात् । अत्रापि होमे तदङ्गेषु च यज्ञोपवीतित्वमेव । मध्यंदिनादूर्ध्वमपराह्णमहः । पञ्चधा विभज्य चतुर्थोऽहर्भागः । अह्नस्तृतीयो विभाग इति केचित् । अष्टकामनुक्रियत इत्यन्वष्टक्यं कर्म ॥ १ ॥

दक्षिणपूर्वे भागे परिवार्य तत्रोत्तरार्धे मथित्वाऽग्निं प्रणयेत् ॥ २ ॥

गृहस्य दक्षिणपूर्वे गृह्याग्नेरिति केचित् । प्रोक्षणान्तं कृत्वा प्रणयेन्निदध्यादित्यर्थः । अस्य श्रपणार्थत्वात्प्राचीनावीती ॥ २ ॥

सकृद्गृहीतान्व्रीहीन्सकृत्फलीकृतान्प्रसव्यमुदायुवं श्रपयेत्॥ ३ ॥

सकृद्गृहीतान्सकृत्फलीकृतानिति सिद्धवद्व्यपदेशान्न स्वयंकर्तृकत्वनियमः । भूतकालनिर्देशाच्च नापराह्णनियमः । सकृदेव तूष्णीं स्थाल्यां निरुप्य सकृत्प्रक्षाल्य मेक्षणेनोदायुवं श्रपयेन्मथितेऽग्नौ गृह्ये वा ॥ ३ ॥

अमुष्माच्च सक्थ्नो मांसमिति ॥ ४ ॥

अन्वष्टक्यार्थं निहितं सक्थ्नो मांसमवदाय भोजनार्थवच्छकलीकृत्य स्थाल्यन्तरे मेक्षणान्तरेणोदायुवं युगपच्छ्रपयेत् । इतिश्चेदर्थे । सक्थि चेद्विद्यते तदेवं प्रथमोत्तमयोरष्टकयोरन्वष्टक्ययोः स्थालीपाक एवेत्यपरं मतम् । अष्टकायै स्वाहेति जुहुयादिति तिसृष्वप्यष्टकास्वविशेषेण वचनान्मध्यमायां पश्वसंभवे केवलस्थालीपाकहोमोऽप्यनुज्ञात एवेति तस्मिन्पक्षेऽन्वष्टक्येऽपि स्थालीपाकश्रपणमेव ॥ ४ ॥

दक्षिणोद्वास्य न प्रत्यभिघारयेत् ॥ ५ ॥

मांसं चरुं च शृतमभिघार्य ॥ ५ ॥

पश्चादग्नेर्दक्षिणतस्तिस्रः कर्षूः खन्याच्चतुरङ्गुलमधस्तिर्यक् ॥ ६ ॥

पश्चादग्नेरुपविष्ट आत्मनो दक्षिणतो दक्षिणापवर्गाः कर्षूः खन्यात् । श्रपणात्पूर्वमेवास्मिन्देश उपवेशने सिद्धे पश्चादग्नेरिति वचनं वक्ष्यमाणं सर्वमस्मिन्नेव देश उपविश्य कुर्यादित्येवमर्थम् ॥ ६ ॥

तासां पुरस्तादग्निं प्रणयेत् ॥ ७ ॥

मध्यमकर्ष्वाः पुरस्तादृजुदेशे द्विपदमात्रं स्वस्तरदेशमतीत्य तत्रोपलेपनादि प्रोक्षणान्तं कृत्वा मथितं सर्वं निदध्यात् । यज्ञोपवीती सर्वत्र यदा प्राचीनावीती भूत्वा यज्ञोपवीती भवति तदोपस्पृशेत् ॥ ७ ॥

स्तृणुयादिति ॥ ८ ॥

स्तरणान्तं यज्ञोपवीती कुर्यात् । नात्र ब्रह्मा । अत्र पश्चात्स्तरणपक्षः ॥ ८ ॥

कर्पूंश्च ॥ ९ ॥

कर्षूणामुपरि दक्षिणाग्रैः प्राचीनावीती छादयेन्न मति । कर्षुं दर्भभेदः ॥ ९ ॥

पश्चादग्नेः स्वस्तरं दक्षिणाग्रस्तृणैर्दक्षिणाप्रवणमास्तीर्य बृसीमुपनिदध्यात् ॥ १० ॥

स्वस्तरमिति कर्मनाम । बृसी कर्मफलकं कटकमिति केचित् । स्वस्तरोपरि निधानम् ॥ १० ॥

तस्मिन्नेकैकमाहरेत् ॥ ११ ॥

तस्मिन्बृसीसंज्ञक उदकपूर्णानि त्रीणि पात्राणि तिस्रो दर्भपिञ्जूलीश्चरुमञ्जनं तैलं गन्धं सूत्रतन्तूंश्चैकैकशः क्रमशो निदध्यात् । एतान्येव प्राचीनावीती कृत्वा यज्ञोपवीती दर्भोपवेशनादिग्रपदान्तं कुर्यात् । बर्हिषि सादनकाले कंसं च सादयेत् ॥ ११ ॥

कंसे समवदाय मेक्षणेनोपघातं जुहुयात्स्वाहा सोमाय पितृमते स्वाहाऽग्नये कव्यवाहनायेति ॥ १२ ॥

चरुं मांसं च सहावदाय सादनं च सादयेत् । कंसे समये [तं] यदि मांसं विद्यते । मेक्षणेन स्रुचशुद्धोर्निवृत्तिः प्रधानहोमयोर्नाग्रोपस्तरणाभिघारणे । उपघातशब्दः पूर्वं व्याहृतिहोमार्थः । अत एवाऽऽज्यभागस्विष्टकृतः कृत्स्नमन्त्रोच्चारणमेतन्मन्त्रान्तो स्वाहाकारनिवृत्तये । अथ भागान्तं समापयेत् । अत ऊर्ध्वं प्राचीनावीती ॥ १२ ॥

सव्येनोल्मुकं दक्षिणतः कर्षूषु निदध्यादपहता इति ॥ १३ ॥

सव्येन हस्तेन कर्षूः प्रज्वाल्य तासां दक्षिणतो निदध्यादुल्मुकमासमाप्तेर्नानुगच्छेत् । असुरादिति मन्त्रान्तः ॥ १३ ॥

पूर्वस्यां कर्ष्वां पितुः ॥ १४ ॥

प्रथमस्यासायां वक्ष्यमाणं पित्र्यं यत्कृत्यं तत्कुर्यात् ।

मध्यमायां पितामहस्योत्तमायां प्रपितामहस्य ॥ १५ ॥

वक्ष्यमाणं सर्वं पितृतीर्थेन दक्षिणापवर्गं क्रमेण पितृपितामहप्रपितामहानुद्दिश्य दक्षिणेन पाणिना कुर्यात् । एत पितर इति पित्रादीनावाहयेन्मन्त्रलिङ्गात् ॥ १५ ॥

उदपात्राण्यवसलवि कर्षूषु निनयेदेकैकस्य
नामोक्त्वाऽसाववनेनिक्ष्व ये चात्र त्वाऽनु
याश्च त्वामनु तस्मै ते स्वधेति ॥ १६ ॥

अवसलवि पितृतीर्थेन । प्रदेशिन्यङ्गुष्ठयोरन्तरा पितृतीर्थम् । विष्णुशर्मन्पितरवनेनिक्ष्वेति पित्रादीनां निर्देशः । यदि नामानि न विद्यात्पितः पितामह प्रपितामहेत्येवं ब्रूयात् । पुत्रिकाजातस्तु मात्रे मातामहाय तत्पित्रे च दद्यात् । अथवा मातामहाय तत्पित्रे तत्पित्रे च दद्यात् । यदि जनयितुः पुत्रान्तरं न विद्यते द्वौ द्वावेकस्मिन्पिण्डे निर्दिशेत् । पुत्रिकापुत्रस्तथा दत्तपुत्रो जनयितुः पुत्रान्तराभावे । एवमन्योऽपि द्वयोः पुत्रः स्यात् ॥ १६ ॥

तथैव पिण्डान्निधाय जपेदत्र पितरो माद-
यध्वं यथाभागमावृषायध्वमिति ॥ १७ ॥

कंसाद्गृहीत्वाऽवनेनिक्ष्वेत्येतस्य स्थाने मुञ्क्ष्वेत्यूहः ॥ १७ ॥

उक्त्वोदङ्ङावर्तेत सव्यं बाहुमु-
पसंहृत्य प्रसव्यमावृत्य ॥ १८ ॥

व्याहृतिपूर्वां सावित्रीं तस्यां चैव गायत्रम् । यद्वा ऊ विश्पतिरित्यादीनि त्रिरयाणि सामान्युक्त्वा सव्यं बाहुमुपसंहृत्य दक्षिणं बाहुं प्रसार्य प्रसव्यमावृत्योदङ्मुखः स्यात् ॥ १८ ॥

उपताम्य कल्याणं ध्यायन्नभिपर्यावर्तमानो जपेदमी-
मदन्त पितरो यथाभागमावृषायिषतेति ॥ १९ ॥

यथाशक्ति निरुच्छ्वास आसीन उच्छ्वास्य यदाऽऽत्मनोऽभिलषितं मेऽस्त्विति ध्यायञ्जपेत् । अभिलषितं तृप्ताः पितरः प्रयच्छन्ति [इति] हि स्मरन्ति ॥ १९ ॥

तिस्रो दर्भपिञ्जूलीरञ्जने निमृज्य
कर्षूषु निदध्याद्यथापिण्डम् ॥२०॥

अक्ष्णोरूहः ॥ २० ॥

तैलं सुरभि च ॥ २१ ॥

सुरभि गन्धः । अभ्यङ्गस्यानुलिम्पेत्यूहः ॥ २१ ॥

पिण्डप्रभृति यथार्थमूहेत् ॥ २२ ॥

स्पष्टम् ॥ २२ ॥

अथ निह्नवनम् ॥ २३ ॥

अथानन्तरदेशे कर्षूणां पश्चात्पाणी निधाय निह्नवनमिति वक्ष्यमाणसंज्ञा व्यवहारार्था ॥ २३ ॥

पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी
कृत्वा नमो वः पितरो जीवाय
नमो वः पितरः शूषायेति ॥२४॥

पूर्वस्याः कर्ष्वाः पश्चात्समीपे दक्षिणं पाणिं प्रागग्राङ्गुलिमुत्तानं भूमौ निधाय तदुपरि तथैव सव्यं न्यञ्चं पाणिं कृत्वा जपेत् ॥ २४ ॥

सव्योत्तानौ मध्यमायां नमो वः पितरो
घोराय नमो वः पितरो रसायेति ॥२५॥

सव्यस्योपरि दक्षिणं न्यञ्चं कृत्वा ॥ २५ ॥

दक्षिणोत्तानौ पश्चिमायां नमो
वः पितरः स्वधायै नमो वः
पितरो मन्यव इति ॥ २६ ॥

गतम् ॥ २६ ॥

अञ्जलिं कृत्वा नमो व इति ॥ २७ ॥

नमस्काराञ्जलिं कृत्वा पितॄनुपतिष्ठते ॥ २७ ॥

सूत्रतन्तून्कर्षूषु निदध्यात्पर्यां पिण्डमेतद्व इति ॥ २८ ॥

क्रमेण ॥ २८ ॥

ऊर्जं कृत्वा नमो व इति नमस्काराञ्जलिं
वहन्तीरिति कर्पूरनुमन्त्रयेत ॥ २९ ॥

सकृत् ॥ २९ ॥

मध्यमं पिण्डं पुत्रकामां प्राशयेत् ॥ ३० ॥

[ स्पष्टम् ] ॥ ३० ॥

आधत्तेति पत्नी मन्त्रं ब्रूयादग्नत्रो हत
इत्युल्मुकमग्नौ प्रक्षिपेत् ॥ ३१ ॥

यद्दक्षिणतो विहितं मन्त्रलिङ्गात् ॥ ३१ ॥

द्वन्द्वपात्राण्यतिहरेयुः ॥ ३२ ॥

निहितानि परिचारका उद्वासयेयुः ॥ ३२ ॥

एष एव पिण्डपितृयज्ञकल्प इति ॥ ३३ ॥

प्रयोगकल्पमिरेवातिदिश्यते न कालः । स त्वन्यतो विज्ञायते । यस्मि-न्नहोरात्रेऽमावास्याक्षणस्तस्मिन्नेवापराह्णे कुर्यात् ॥ ३३ ॥

विशेषस्तूच्यते—

गृह्येऽग्नौ हविः श्रपयेत् ॥ ३४ ॥

चरो(मे)व न मांसम् ॥ ३४ ॥

तत एवातिप्रणयेत् ॥ ३५ ॥

गृह्याग्नेरेकदेशं प्रणीतस्य कर्मापवर्गे लौकिकत्वं चाग्र मह्यग्राऽस्ति दक्षिणा च हविरुच्छिष्टदानम् ॥ ३५ ॥

एका कर्षूः ॥ ३६ ॥

एकस्यामेव पित्रादीनां त्रयाणामपि सर्वं यथाक्रमं कुर्यात् ॥ ३६ ॥

न स्वस्तरः ॥ ३७ ॥

स्वस्तरदेशे द्रव्याणां न निधानम् ॥ ३७ ॥

मधुपर्कं प्रतिग्रहीष्यन्निदमहमि-
मामिति त्रिष्टुभञ्जपेत् ॥ ३८ ॥

मधुपर्कप्रदातुः परिचारकैः प्रतिग्रहीतुः पुरस्ताद्गोमयेन गोमुत्रं कारयित्वा तत्र विष्टरादिषु पूजासाधनेषु समाहृतेषु तान्मधुपर्कार्था-

न्यायन्मधुपर्कं प्रतिग्रहीष्यन् । अथ पैतृकप्रसङ्गाद्दहनविधिरुच्यते—
आहिताग्नेर्मरणसंशयेऽग्नीन्विहृत्याजस्रं कुर्याद्वा । दहनाद्वा व्याधिमोक्षाद्वा
यद्यपरपक्षे मरणं शङ्केत यावत्योऽपरपक्षस्यातिशिष्टाः सायंप्रातराहुत-
यस्ताः सर्वास्तदानीमेव क्रमेण हुत्वाऽमावास्येष्ट्या यजेत । केचित्पक्ष-
होमतन्त्रेण होममिच्छन्ति । इष्ट्यभावे चतुर्गृहीतान्याज्यानि तस्यै तस्यै
प्रधानदेवतायै पुरोनुवाक्यामनूच्य याज्यया जुहुयात् । प्रक्रान्ताया-
मिष्टौ हविष्क्लृप्त्यसंभवे चतुर्गृहीतैरेवाऽऽज्यैर्यजते । हविषः क्लृप्तेषु
यदि म्रियेत सर्वेभ्यः प्रधानहविर्भ्यः समवदाय सर्वाः प्रधानदेवताश्च-
तुर्थ्या विभक्त्याऽनुद्रुत्य स्वाहाकारेण जुहुयात् । मरणादूर्ध्वं शिष्टस्य
लोप एव । यद्यहुतास्वेवातिशिष्टाहुतिष्वन्वारब्धायां चेष्ट्यां म्रियेत तदा
द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायन्नाहवनीये जुहोति ।
योऽस्याग्निरजुहतो मांसकामः संकल्पयते यजमानमांसं जानाति । ते
हविषे सावित्राय स्वर्गं लोकमिमं प्रेतं नयत्विति सर्वस्य समाप्त्यर्थम् ।
चातुर्मास्यादिष्वारब्धेष्वनयैव दिशा समाप्तिः । यदि पूर्वपक्षे रात्रौ
मरणं शङ्केत तदानीमेवाऽऽगामिनीं प्रातराहुतिं जुहुयात् । यद्यविहृते-
ष्वग्निषु म्रियेत तदानीमेव विहृत्यातिशिष्टसमाप्तिं च कृत्वोपक्रमः ।
मरणसमीपकाले दक्षिणाग्नेः पुरस्तात्सिकताः प्रकीर्य दक्षिणाग्रेषु दर्भेषु
दक्षिणाशिरसं संवेश्य ' अग्न आयाहि वीतये ' ' एष स्य धारया सुत '
इति वर्गद्वयं त्रीण्याज्यदोहानि ' आदित्प्रत्नस्य रेतसः ' ' उद्वयं तमस-
स्परि ' ' उन्नयामि ' इति सामानि प्राक्स्मृतिवियोगात्संस्कर्ता श्राव-
येत । तवश्यावीयानि च श्रावयेद्यदि श्राव्यस्तवश्यावीयान्यधीतवान् ।
केचिद्दूर्गित्यादियमन्तं तवश्यावीयान्याहुः । शाखान्तरस्थानीत्यपरे ।
मरणकाले ' अभिप्रधा अप्सु वृक्षाः सेतुषाम च ' [ इति ] दक्षिणे
कर्णे जपति । स्मृतिभ्रंशे तवश्यावीयानां निवृत्तिः । मृतश्चेत्सेतुषामा-
न्तानां निवृत्तिः । उत्क्रान्ते प्रजापतेर्हृदयं मनसा ध्यायेत् । स्नापयित्वा
शवमलंकृत्य बद्ध्वाऽदशेनाङ्गुष्ठे पाण्योः पादयोश्चौदुम्बर्यामासन्द्यां दक्षि-
णाशिरसमुत्तानं संवेश्योदग्दशेनाहतेन वाससा प्रच्छाद्य ज्ञात्यादयो
निर्हरन्त्यग्नींश्चाऽऽहिताग्नेरौपासनं च । यदि सर्वमाहितोऽनाहिताग्निरौ-
पासनेन ब्रह्मचारिणं कपालसंतपनाग्निनोत्तपनीयेनेतरानलेन म्रियो
यद्युत्सृष्टाग्निर्विच्छिन्नाग्निर्विधुराग्निर्वा प्रमीयेत द्वादशगृहीतेन स्रुचं पूर-
यित्वा लौकिकेऽग्नौ प्रजापतिं मनसा ध्यायञ्जुहोति । क्षीरदधिमधु-

मृततिलतण्डुलोदकुम्भचर्मपरशुयज्ञपात्राणि पुरस्तादग्नीन्संस्कर्ता मुक्तशिखो मध्यतः शवं पश्चात्संभारानितरे श्मशाने निहितेषु संकल्प्योरमृज्यान्ते गच्छा (स्वाऽ) ग्रमध्वनः पूर्वमेष वः सुहृदो दिवं परं व्योम नयध्वं गच्छन्तं स्थानमुत्तममिति प्रागुदीच्यां दिशि पञ्चदश प्रक्रमान्प्रक्रम्य प्रकान्तदेशं दक्षिणाप्रत्यक्प्रवणममङ्गुरमनिरिणमसुषिरं समं वाऽऽर्द्रया शमीशाखया पलाशशाखया वारुणशाखया वाऽपसर्पत प्रेता ये केचिदिह पूर्वजा इति दहनदेशं संमृज्याद्भिरवोक्ष्य तिस्रः कर्षूर्दक्षिणापवर्गाः परशुना खात्वोद्धृत्य मृत्तिकां पलाशपत्रपुटे कृत्वा याम्यां दिशि निधायाप उपस्पृश्य तिलतण्डुलानां मुष्टिं पूरयित्वा यमाय दहनाधिपतये प्रेताय स्वधा नम इति प्रथमखातायां निवपति । कालाय दहनाधिपतये प्रेताय स्वधा नम इति मध्यमायाम् । मृत्यवे दहनाधिपतये प्रेताय स्वधा नम इत्युत्तमायाम् । आद्येन वा मन्त्रेणावशिष्टान्सर्वतः प्रसव्यं प्रकीर्य मध्यमायां कर्ष्वां हिरण्यशकलमुपरि निधाय तत्र दर्भानास्तीर्य तेषु यज्ञियैः काष्ठैर्दक्षिणाग्रैर्दारुचितिं चित्वा प्रेतस्य केशश्मश्रुलोमनखानि वापयित्वा दक्षिणतो वितस्तिमात्रमवटं खनित्वा तत्र तानि निदधाति । स्नापयित्वा शवं चितिं चाद्भिरवोक्ष्य शवमुत्तानं दक्षिणाशिरसं संवेश्य शवं परिस्तीर्य दक्षिणाग्रैर्दक्षिणाग्रेषु दर्भेषु पश्चात्पात्राण्यासाद्य पश्चाद्गार्हपत्यमवसादयति । दक्षिणतो दक्षिणाग्निं पुरस्तादाहवनीयं सभ्यावसथ्यौ च वायव्यामौपासनं पुरस्तादास्ये चक्षुषोर्नासिकयोः श्रोत्रयोश्च सप्त हिरण्यशकलानाज्यबिन्दूना सप्त व्याहृतीर्मनसा ध्यायन्निरस्यत्याज्यं मुखे निनीय पादप्रभृत्यामुखान्तात्संततं शेषं निनीय दक्षिणतः पात्रं निरस्यति एवं दधिमधुतिलतण्डुलाश्च । आहिताग्निश्चेत्पात्राणि सादयेत् । यानि बिलवन्ति तानि पृषदाज्येन पूरयित्वोत्तानानि सादयेत् । शिरसि कपालानि चरुस्थाली च बहुपशुके कर्मणि समवदानार्थं चमसोऽर्थितं च शिरस्येव सादयेत् । इडापात्रमित्यन्ये । ललाटे प्राशित्राहरणं नासिकयोः स्रुवौ कर्णयोश्चाऽऽस्ये हिरण्यशकलमवधायानुस्तरणिकया गोर्वपया मुखं प्रच्छाद्य तत्राग्निहोत्रहवणीं प्रागग्रां दक्षिणे पाणौ जुहूं सव्य उपभृतं पार्श्वयोः स्फ्योपवेशावनुस्तरणिकया ... नाम मांसपिण्डौ वर्तुलाकारौ तयोर्दक्षिणं दक्षिणे पार्श्वे सव्यं उरसि ध्रुवामुदरे पात्रीमुपस्थे कृष्णाजिनं दक्षिणस्य

दक्षिणात उलूखलं दक्षिणसक्थ्यनु मुसलानि पादयोः शकटशूर्पे इतरत्सर्वं कृष्णाजिनानन्तरेण सक्थानि सादयेत् । क्रमस्तु कृष्णाजिनानन्तरस्य । अथ सपिण्डाःस्त्रीप्रथमाः कनिष्ठपूर्वा आऽयं गौरिति याम्यतृचस्य प्रथमां स्तोत्रीयां सप्तदस्तोमामुक्त्वाऽगन्म ज्योतिरिति सत्रस्यार्द्धं गीत्वा सव्यतः केशान्प्रकीर्य दक्षिणानूरूनाघ्नानाः पाणिभिः सिग्भिरभिधून्वन्तो प्रदक्षिणं मृतं त्रिः परीयुः । वातास्ते वान्तु पथि पुण्यगन्धा मनःशुभा गात्रशुभा अनुलोमास्त्वचः सुखा मांससुखा अस्थिसौख्या वहन्तु त्वां मरुतः सुकृतां यत्र लोका इति मृतमनुमन्त्र्य दक्षिणतः केशान्प्रकीर्य सव्यानूरूनाघ्नाना अभिधून्वन्तस्त्रिः प्रदक्षिणं परीयुः । एवं द्वितीयां स्तोत्रीयामुक्त्वा सत्रस्यार्द्धं अपदक्षिणानुमन्त्रणं पूर्ववत्तृतीयामुक्त्वाऽपि तथैव कुर्युः । त्रिषु स्थानेषु सिग्वाता भवन्ति ग्रामे पथि चितायां सर्वे चितायां वा । अथ पत्नी संस्कर्ता वा शिरसि दर्भेषु पूर्णकुम्भं निधाय मृतं त्रिः प्रदक्षिणं पर्येति । प्रथमे प्रदक्षिणेऽश्मना परशुना वाऽधस्तात्किंचित्प्रहरति उदकुम्भं तां धारामनुमन्त्रयेत— 'इमा आपो मधुमत्योऽस्मिंस्ते लोकमुपदुह्यन्तामक्षीयमाणाः स्वधा नमः' इति । एवं द्वितीये तृतीये चोपर्युपरि प्रहरणमन्तरिक्षे स्वर्ग इति मन्त्रविकाररहितत्रेचोदककुम्भं विसृजेत् । मास्येत्कपालस्थस्रुवकं प्रेतस्य प्राणस्थानेष्वाप्यायस्वेति निनयति । कृष्णातिलैर्मृतमवकीर्याङ्गुष्ठपार्वौ छित्त्वाऽऽज्येन पराङ्मुखो हस्ताभ्यां सुरभिर्नाकपृष्ठं स्वधा नम इति प्रेतस्य पादावभ्यज्याऽऽर्द्रानोषधिवनस्पतीनालभ्योत्तिष्ठति । पयसा हस्तौ प्रक्षाल्याऽऽदित्यं पश्यति । ब्राह्मणं गां च दृष्ट्वा सुवर्णमालभ्य कुशैर्मृतं छादयित्वा सर्वेभ्योऽग्निभ्य उल्पराजी स्तृणुयात्तत्र यथाऽस्मिन्नग्नयः समवेयुः । आहवनीयश्चेत्स्वर्गमेनमयाद्ब्रह्मलोकमेष्यतीति विद्याद्गार्हपत्याद्दैवं लोकं दक्षिणाग्नेः पितृलोकम् । तस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनरसौ स्वर्गाय लोकाय स्वाहेत्यग्निं शरीरेण संयोजयेत् । असाविति प्रेतनाम ब्रूयाद्विष्णुशर्मन्निति वत् । अथ नाके सुपर्णमिति ग्रामे गेयेनोपतिष्ठेत धूम उदिते त्वेषस्ते धूम ऋण्वतीति प्रज्वलितेऽग्ने मृडा महाँ३ असीत्येतयोरन्यतरेण वाऽस्तोऽगन्म ज्योतिरिति च त्रिष्विरेतानि सामानि गायेत् । दहनमन्त्रेणाऽऽज्याहुतिं च हुत्वा वामदेव्यं तृचे गीत्वा नमो वः पितर इत्युपांशु जपित्वा तूष्णीं प्रदक्षिणं कुर्यात् । पत्नी गां दक्षिणां संस्कर्त्रे दद्यात् । तदभावे दायादः । अथ सपिण्डा अधोमुखा

उदकं प्रजन्ति। राजपुरुषः स्वगोत्रबान्धवो वा कण्टकिनीं शाखामादाय माऽवतरतेति तान्निवारयेन्न पुनरवतरिष्याम इति प्रतिब्रूयुः। केशान्प्रकीर्य पांसूनोप्यैकैकवाससो दक्षिणामुखाः सकृदुपमज्ज्योत्तीर्याऽऽचम्यामुं प्राप्नोत्वमुं प्राप्नोत्विति वासः पीडयन्ति। केशान्प्रकीर्येत्यादिरेवं त्रिराचम्यासावेतत्त उदकमित्युदकाञ्जलिं तिलमिश्रं दद्युर्वत्सगोत्राय कृष्णशर्मणे प्रेतायैतत्तिलोदकं ददामीतिवन्मन्त्रोऽथोदकवासांसि गृहीत्वा ग्रामं प्रविश्य गृहद्वारपार्श्वे वटे शरावं तत्पुपर्यश्मानं च निधाय स्त्रीप्रथमाः कनिष्ठपूर्वा उदकदानमन्त्रेण तत्र वासं ( सांसि ) पीडयन्ति। वासं च दीपं च पुरः प्रविश्य मरणदेशं गोमयेनोपलिप्य प्रदीपे प्रज्वलिते दूर्वातण्डुलानुदकमिश्रान्विकिरन्ति। स्वस्त्यस्तु वो गृहाणां शेषे शिवं वोऽस्त्विति। अथ सायंकाले प्रेतोद्देशेनैकं ब्राह्मणमामन्त्र्य कंसवस्त्रादिना यथासंभवं तर्पयेयुः। द्वितीयादिष्वहःसु दशाञ्जलिवृद्धोदकक्रिया। प्रथमतृतीयपञ्चमसप्तमनवमेषु वाऽहःस्वासंचयनाद्वारिवासः पीडयन्ति। यावदाशौचं सर्वे सपिण्डा अधःशय्यासनिनो ब्रह्मचारिणः सर्वे न मार्जयीरन्न दानप्रतिग्रहौ यज्ञस्वाध्यायौ च तेषां निवर्तेते। नित्यं वैतानि वर्ज्यानि। एकोद्दिष्टान्मांसं न भक्षयेयुः। संस्कर्ता भोजनात्पूर्वं द्वितीयादिष्वहःसु गृहद्वारपार्श्वे दक्षिणाग्रेषु दर्भेषु बलिं दद्यादेष ते बलिरिति मन्त्रविकारः। एष ते पिण्ड इति पिण्डाकृति वा दद्यात्। दशाहमध्ये यदि दर्शो भवति मातापितृव्यतिरिक्तानां तत्रैव पिण्डोदकसमापनम्। एवं पत्नी पूर्वमारणीं संस्कुर्यात्। अस्याः केशश्मश्रुलोमनखच्छेदवर्जं वपनानन्तरं स्नानं च निवर्तते। सहप्रवासे दंपत्योः सहैव पितृमेधः कार्यः पृथक्पिण्डोदकक्रिया।

रजस्वला प्रसूता वा मृता चेदुद्धृतैर्जलैः।
स्नापयित्वा च तां पावमानीभिः स्नापयेत्पुनः॥
आच्छाद्यान्येन वस्त्रेण कुर्याद्दाहादिकं ततः।

यद्युत्सृष्टाग्निर्विच्छिन्नाग्निर्विधुराग्निर्वा प्रमीयेतोद्धृत्यावोक्ष्य विकारं कल्पयित्वा गार्हपत्यायतनेऽग्निं मथित्वा तूष्णीं विहृत्य द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायन्नाहवनीये जुहुयात्। औपासनाग्निविच्छेदादौ लौकिकाग्नौ द्वादशगृहीतं हुत्वा तत उपक्रमते। यद्यारूढोऽ(ढा)ग्निर्म्रियेत तस्य दक्षिणं पाणिं लौकिकेऽग्नावमितस्योपावरोहेत्यवरोहेत। यद्यरण्यारूढोऽ( ढा )ग्निर्म्रियेत तस्य दक्षिणेन

पाणिनाऽरणिं संस्पृश्य मथित्वाऽवरोहयेत् । यदि देशान्तरे म्रियेता-संस्कारात्निहोत्रं जुहुयात् । अग्निरक्षणार्थं तस्य मृतिश्रवणानन्तरं पथिकृतीमिष्टिं कृत्वा तदर्थं विहृतानेवाग्नीनजस्रान्कुर्यात् । या मृत-वत्सा वत्सान्तरेण दुह्यते तां प्राचीनावीती दोहयति । परिस्तरणदर्भानु-दगग्रान्दक्षिणाग्रान्कृत्वा दक्षिणार्धे गार्हपत्यस्य शीते तस्मिन्नधिश्रित्य दक्षिणोद्वास्य सकृदेव सर्वं तूष्णीमुत्तीयाधस्तात्समिधं धारयन्दक्षिणेन विहारमुद्धृत्य सकृदेव सर्वं तूष्णीं जुहुयात् । प्राशनोत्सेचनपरिषेचनानि न स्युरितरत्सर्वममन्त्रकं कुर्यात् । प्रेतं तैलद्रोण्यामवधाय शकटेन ग्राम-सीमानमाहरेद्दग्ध्वाऽस्थीनि कृष्णाजिनेनोपनह्य ब्रह्मचारी मृन्मयमो-ऽपधः शय्यां हरेत् । तथाग्निं नीत्वा वहेत् । एवमेवौपासनेनाऽऽहिताग्नि-( ग्निं ) दहेद्यज्ञपात्रवर्जम् । ब्रह्मचारिणं कपालसंतपनाग्निनोत्तपनीये-नेतरानन्येन । स्त्रियोऽनुपनीतानां कुमाराणां च संमार्जनदहने समन्त्रके स्यातामितरत्सर्वं तूष्णीं कुर्यादुदकक्रियाऽपि मन्त्रेण वा । अस्थिसञ्चय-नादीनि वर्तन्ते । यावदाशौचमेवोदकक्रिया । चूडाकरणात्प्राङ्न भूसं-स्कारो नोदकक्रिया । प्रासङ्गिकमुक्तम् । दहनशेष उच्यते । यदि शरीरं नश्येत्पलाशपत्रैः समूलैः कृष्णाजिनेन पुरुषाकृतिं कुर्यात् । चत्वारिं-शता शिरो दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशता पञ्चाशता बाहू तयोरेव पञ्चभिः पञ्चभिरङ्गुलीः सप्तत्या सप्तत्या पादौ तयोरेवाङ्गुलीर्दशभिः शिश्नं द्वादशभिर्वृषणं तां कुशैर्वेष्टयित्वा प्रेतं संकल्प्य पूर्ववद्दहेत् । अग्निशरीरास्थ्नामन्यतमस्य वा सद्भावे वा संस्कारः । द्वितीये तृतीये पञ्चमे सप्तमे वाऽङ्गन्यस्थिसं-चयनं कुर्यात् । स्नात्वोदकक्रियां कृत्वा द्वारे वासः पीड-यित्वा शरावाश्मानावुद्धृत्यावटं पूरयित्वा पिण्डं दत्त्वा चरुस्थालीं तण्डुलशरावकुम्भक्षीरदधिमधुघृतोदकहिरण्यशकलनारिकेलापूपपुष्पफ-लशैवलवीरणस्तम्बौदुम्बरशाखासंदंशोध्मकर्दमादीन्गृहीत्वा　　श्मशानं गत्वा दहनाग्निमलमुकं दक्षिणाऽपोह्य तदभावे मथित्वा प्राजापत्यान्तम-न्त्रकं विधाय गृह्योक्तेन विधानेन ब्रह्मवरदाज्यभागस्विष्टकृत्कृत्बलि-वर्जं यमाय त्वा जुष्टं निर्वपामीति निरुप्य जीवतण्डुलं श्रपयित्वा दक्षिणोद्वास्य नातिवारयेत् । व्याहृतिभिराज्यं हुत्वोपस्तरणाभिधार-वर्जं दर्व्यां चरोः सकृत्सकृद्गृहीत्वा सप्ताऽऽहुतीर्जुहोति स्वाहा सोमाय पितृमते स्वाहाऽग्नये पितृमते स्वाहाऽग्नये क्रव्यादे स्वाहाऽग्नये कव्यवा-

हनाय स्वाहा यमाय स्वाहा यमायमीभ्यां स्वाहा विवस्वत इति। यज्ञवास्त्वन्तं कृत्वा तन्त्रं समाप्य क्षीरोदकेनौदुम्बरशाखयाऽस्थीन्यवोक्ष्याऽऽर्द्राणि कृत्वा पलाशसंदंशेनौदुम्बरसंदंशेन वा शिरस्युरसि पार्श्वयोः पादयोः पाण्योश्चास्थीन्यप्रदक्षिणानि गृहीत्वा दक्षिणतः पलाशपत्रपुटे कृत्वा वहेमं मग्रं प्रच्छाद्य धीति माति मानुनेति कुम्भे समोप्य क्षीरदधिमधुघृतोदकैः पूरयित्वा हिरण्यशकलमुपरि निधाय प्राग्वाहिनीं सरस्वतीं संकल्प्य प्राचीं रेखामुल्लिख्य तत्रोदकं निनीय तस्मिन्नुदकेऽस्थिकुम्भं प्लावयित्वा वृक्षमूलेऽस्थिकुम्भं निदधाति। निखमेद्वा यावदस्थीनि सुरक्षितानि भवन्ति तावत्स्वर्गे लोके वसति मृतः। अनड्वाह्न( ड्वाहं ) कंसो( सं ) वासो दक्षिणा( णा ) संस्कर्त्रे दद्यात्। पत्नी दायादो वा यदीच्छेज्जीवन्नेव संस्कर्त्रे दद्यात्। ऊर्ध्वरेताः प्रजनासमर्था स्त्री वाऽस्थीनि दृष्यादिति केचित्। अथ भस्म समुह्य भस्मराशिं कर्दमेन प्रच्छाद्य शैवलेन च्छादयित्वा वीरणस्तम्बं तत्र प्रतिष्ठाप्य पुष्पपत्रैः प्रच्छाद्य पुष्पमयीं प्रतिकृतिं कृत्वा पुष्पफलभक्षान्प्रकीर्य तं चरुशेषं प्रेतराजाय नमः प्रेतायेति दत्त्वोदपात्रं तत्र निनयेत्। संचित्योदकक्रियास्थानं तद्दहनं गच्छेयुः। अथ दशमेऽहनि केशश्मश्रुलोमनखानि वापयित्वा स्नात्वा दशाञ्जलिमुदकं दत्त्वा पूर्ववद्वेदिकापूजां कृत्वा च पुनः स्नात्वाऽग्र आयूंषीत्यादित्यमुपस्थाय पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतं शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशेयमिति सर्वे सपिण्डा जपेयुः। अथ ग्रामश्मशानयोर्मध्ये महापथे वृक्षमूले वा गोचर्मण्युपविश्य गृह्योक्तविधानेन लौकिकेऽग्नौ चरुमन्त्रैः ससाऽऽहुतीर्हुत्वा तन्त्रं समाप्य पुण्याहं वाचयेत्। नात्र ब्रह्मणा भवितव्यम्। गृहागताः सगोत्रा उदकदातारः पुत्राः पौत्राः प्रपौत्राश्च जीवन्तु शरदः शतमिति जपेयुः। अथैकोद्दिष्टम्।' दशमेऽहनि रात्रौ प्रेतोद्देशेनैकं ब्राह्मणमामन्त्र्य प्रभाते गृहं गोमयेनोपलिप्य मध्यंदिन एकोद्दिष्टं कुर्यात्। प्राणायामं कृत्वा प्राचीनावीती भूत्वैकां कर्षूं खात्वा तत्र दक्षिणाग्रान्दर्भान्निधाय ततः पश्चात्प्राङ्मुखं ब्राह्मणमुपवेश्य तिलमिश्रैर्जलैस्तस्य पादौ प्रक्षाल्य दक्षिणाग्रेषु दर्भेषूदङ्मुखमुपवेश्य तस्य दक्षिणं पाणिं दक्षिणेन पाणिना संस्पृश्य वत्सगोत्राय विष्णुशर्मणे प्रेताय प्रथमैकोद्दिष्टश्राद्धे भवता क्षणः कर्तव्य इति-

प्रेतस्य गोत्रनामनिर्देशेन वरणं कुर्यात् । ॐ तथेति भोक्ता । प्राप्नोतु भवानिति प्रदाता । प्राप्नवानीति भोक्ता । ततस्ताम्बूलादि प्रदायाभ्यङ्गं कुर्यात् । स्नातवति पादप्रक्षालनवरणे पूर्ववत्कृत्वा पवित्रान्तर्हिते पात्रे शं नो देवीरिति मन्त्रेणोदकं गृहीत्वा तिलोऽसीति तिलानावपेत् । सर्वत्र पितृशब्दस्थाने प्रेतशब्दं ब्रूयात् । अत्र स्वधानमःशब्दौ न स्याताम् । ततो भोजनपात्रं दत्त्वाऽर्घपात्रस्थं पवित्रं तस्य दक्षिणहस्ते दक्षिणाग्रं निधायार्घपात्रात्किंचिदुदकमादाय या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शं स्योना सुहवा भवन्त्वित्यनेन मन्त्रेण यज्ञशर्मन्प्रेतैतत्तेऽर्घमिति प्रेतनामोक्त्वा सपवित्रे हस्ते निनयेत् । भोक्ताऽस्त्वर्घमित्युक्त्वा तज्जलं शिरस्यवनयेत् । दाता पुनः पवित्रमादायार्घपात्रे प्रक्षिप्य गन्धवस्त्रधनादिकं प्रदाय सर्वव्यञ्जनसहितमन्नं पात्रे निधाय पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्यनेन भोजनपात्रमालभ्य भोक्तुरङ्गुष्ठमिदं विष्णुर्विचक्रम इत्यनेन मन्त्रेणान्नेऽवधायापहता इत्यनेन मन्त्रेणाप्रदक्षिणं परिषिच्य भोजनकाले भूर्भुवः स्वरिति जपित्वा सावित्रीं तत्साम च यद्वा उ विश्पतिरित्यादि कनिक्रन्तीत्यन्तं पिडवर्गं श्रोतव्यं भुक्तवति तृप्तोऽसीति पृष्ट्वा तृप्तोऽस्मीत्यनुज्ञातस्ते प्रेत जीवाय ते प्रेत शूषाय ते प्रेत घोराय ते प्रेत रसाय ते प्रेत मन्यव इति ते प्रेत प्रेत गृहान्नः प्रेत देहि सदस्ते प्रेत देष्मेति मन्त्रसूक्तेन जपेत् । ये अग्निदग्धा जीवा ये अप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् । इत्यनेन मन्त्रेणोच्छिष्टसमीपेऽन्नं प्रकीर्य सकृदाचान्ते शेषमन्नमन्नशेषैः किं क्रियतामिति पृष्ट्वेष्टैः सहोपभुज्यतामित्यनुज्ञात उच्छिष्टसमीप एकां कर्षूं खात्वा कर्षूमुल्मुकं प्रज्वाल्यापहता इत्यनेन मन्त्रेणोल्मुकं दक्षिणतो निदध्यात् । अथोदकपात्राज्जलमादाय यज्ञशर्मन्प्रेतैतत्प्रेतनामोक्त्वाऽवनेनिक्ष्व ये चात्र त्वाऽनु यांश्च त्वमनु तस्मै ते नम इति पितृतीर्थेन निनयेत् । जलपात्रं कर्षूं दक्षिणतोऽवाङ्मुखं प्रक्षिपेत् । अथ कंसपात्रे चरुं मर्दयित्वा तिलव्यञ्जनादिभिर्मिश्रीकृत्य कुक्कुटाण्डप्रमाणमेकं पिण्डं देवदत्तशर्मन्नुङ्क्ष्व ये चात्र त्वाऽनु यांश्च त्वमनु तस्मै ते पिण्डमित्यनेन मन्त्रेण कर्षूं निदध्यात् । अत्र प्रेत मादयस्व यथाभागमावृषायस्वेत्युक्त्वा भूर्भुवः स्वः सावित्रीं तत्साम

च यद्वा उ विश्पतिरित्यादिपित्र्याणि सामानि गीत्वोदङ्मुखमावर्तेत । सव्यं बाहुमुपसंहृत्य प्रसव्यमावृत्य यथाशक्ति निरुच्छ्वासो भूत्वाऽभिलषितं मेऽस्त्विति ध्यायन्नभिपर्यावर्तमानः पिण्डं प्रति जपेत् । असौ मदन्त प्रेत यथाऽसौ भागमावृपायद्रेति । ततोऽञ्जनपात्रादञ्जनमादायैकां दर्भपिञ्जूलीमञ्जनेन मर्दयित्वाऽङ्क्ष्व ये चात्र त्वाऽनु यांश्च त्वमनु तस्मै तेऽञ्जनमित्यनेन मन्त्रेण कर्त्ता दर्भपिञ्जूलीं निदध्यादञ्जनपात्रं च पूर्ववत्कुर्यात् । एवं तैलगन्धयोर्दानमभ्यङ्क्ष्वानुलिम्पेति मन्त्रविकारः । कर्त्ता पश्चान्निह्नवनं दक्षिणं पाणिं पूर्वाग्रमुत्तानं भूमौ निधाय तस्योपरि पूर्वाग्रमेव सव्यं पाणिमवाङ्मुखं निधाय ते प्रेत जीवाय ते प्रेत शूषायेति मन्त्रतः सव्यमुत्तानं तस्योपरि दक्षिणमवाङ्मुखं निधाय ते प्रेत घोराय ते प्रेत रसायेति द्वितीयम् । प्रथमनिह्नवनवत्पाणी कृत्वा ते प्रेत स्वधाय ते प्रेत मन्यव इति तृतीयम् । ते प्रेत प्रेत ते गृहान्नः प्रेत देहि सदस्ते प्रेत देष्मेत्यनेन मन्त्रेण प्रेतमुपतिष्ठेत । एतत्ते प्रेत वास इति वासोदानम् । ऊर्जं वहन्तीरिति विवरणेनाप्रदक्षिणं पिण्डं परिषिच्याऽऽचान्तेषु पुष्पाण्यक्षतांश्च दत्त्वोत्तिष्ठतामिति वाचयित्वा दातारो नोऽभिवर्धन्तामित्युक्त्वा कर्ता दातारो व इति वाचयित्वा तं प्रदक्षिणीकृत्य छत्रोपानत्कुण्डलपवित्राङ्गुलीयकाञ्चनादि दत्त्वा प्रणिपत्य प्रसादयेत् । तमभिरमतामिति विसृज्यानुव्रज्य प्रदक्षिणीकृत्य गृहं प्रविश्य वामदेव्यं तृचं गीत्वा पिण्डमप्सु प्रक्षिपेत् । गां विप्रमजं वा पिण्डं प्राशयेत् । वयोभिर्वा खादयेत् । स्नात्वा शेषं भुञ्जीत । अस्तमयात्प्रोच्छिष्टमार्जनम् । ग्रामाद्बहिरुदकसमीपे पिण्डदानं केचित्कुर्वन्ति । अथ पयोव्रतः पावनार्थं समुद्रमवगाहेद्दशसहस्रं वा गायत्रीं जपेत् । तिस्रो वाऽनश्नन्संहितामधीयीत पायसेन वा ब्राह्मणान्भोजयेत् । ततः पुण्याहं वाचयित्वा पूतो भवति । अस्मिन्नेकोद्दिष्टे न दैवं नाऽऽवाहनं न धूपो न दीपो नोदकपिण्डसंसर्गः । एतदेकोद्दिष्टान्तं तत्पुत्राभावे प्रत्यासन्नः सपिण्डः कुर्यात् । तदभावे मातृसपिण्डः शिष्यर्त्विगाचार्या वा । एतदेकोद्दिष्टं प्राक्सपिण्डीकरणान्मासि मासि यस्यां तिथौ मृतस्तस्यां कुर्यादूर्ध्वं तु प्रतिसंवत्सरम् । मरणादूर्ध्वं तृतीये पक्षे षष्ठे मासि चेत्येके । संवत्सरादर्वाक्सपिण्डीकरणम् । प्रतिवर्षे(?) ततः पूर्वाणि मासिकादीन्यपि प्रतिकृष्य कर्तव्यानि । सोदकुम्भमन्नमहरहर्दद्यात् । अथ द्वादशेऽहनि तृतीये

पक्षे तृतीये मासि चतुर्थे षष्ठ एकादशे संवत्सरे वा सपिण्डीकरणम् । पूर्वेद्युरनिन्दितान्श्रुतवच्छीलसंपन्नान्पञ्च ब्राह्मणानामन्त्रयेत । द्वौ दैवे त्रीन्पित्र्ये प्रेतायैकम् । आमन्त्रिता अन्यं न प्रतिगृह्णीयुः । परेद्युः स्नातानाहूय प्रक्षालितपाणिपादानाचान्तान्प्राङ्मुखानुपवेश्य स्वयं च प्रक्षालितपाणिपाद आचान्तः पवित्रपाणिः प्राङ्मुख उपविश्य प्राणायामं कृत्वा प्राचीनावीती भूत्वा प्रेतस्य गोत्रनामनी चोक्त्वा सपिण्डीश्राद्धं करिष्य इति संकल्प्योदगग्रेषु दर्भेषु प्राङ्मुखौ द्वौ विश्वेभ्यो देवेभ्य उपवेश्य प्राचीनावीती भूत्वा दक्षिणाग्रेषूदङ्मुखान्पितृपितामहप्रपितामहेभ्यस्त्रीन्विप्रानुपवेश्य दक्षिणाग्रेषु प्रेतायैकं प्रत्यङ्मुखमुपवेश्य यज्ञोपवीती दैवं सर्वं होमं च प्राचीनावीती पित्र्यं प्रेतार्थं च सर्वं कुर्यात् । द्वौ दर्भौ विश्वदेवहस्ते दत्त्वा प्रेतस्य गोत्रनामनी चोक्त्वाऽमुष्य सपिण्डीकरणश्राद्धे विश्वेभ्यो देवेभ्यः क्षणः कर्तव्य इति पृच्छति । ॐ तथेति प्रतिवचनम् । प्राप्नोतु भवानिति पृच्छति । प्राप्नवानीत्यनुज्ञातस्ततो यवानादायोंकारं कृत्वा विश्वान्देवानावाहयिष्य इति पृच्छति । ओमावाहयेत्यनुज्ञातो 'विश्वे देवास आगत शृणुताम इमं हवम् । एदं बर्हिर्निषीदत' इत्यनयाऽऽवाह्य यवैरवकीर्य 'विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उपद्यविष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम्' इति जपित्वा पित्र्ये द्विगुणभुग्नांस्तु दर्भान्दत्त्वा पूर्ववत्पितृपितामहप्रपितामहेभ्यः क्षणः कर्तव्य इति प्रत्येकं पृच्छति । पूर्ववत्प्रतिवचनम् । तिलानादायोंकारं कृत्वा पितॄनावाहयिष्य इति पृच्छति ओमावाहयेत्यनुज्ञात 'एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्तास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत' इत्यनयाऽऽवाह्य तिलैरवकीर्यापहता इति 'आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्त्वधिब्रुवन्तु ते अवन्त्वस्मान्' इति जपित्वैवमेव प्रेतस्य वरणं कृत्वा पात्रयेण तिस्रः कर्षूर्दक्षिणापवर्गाः खात्वाऽक्षतैः प्रथमकर्षूमलंकृत्येतरे च तिलैरलंकृत्य प्रथमकर्ष्वां दैवपादौ प्रक्षाल्य मध्यमायां पित्रादीनामुत्तमायां प्रेतस्यैते सुरभिभिर्वारिभिः प्रक्षालितपादाः पूर्ववदुपविशेयुः । तत उपविष्टेभ्यो गन्धपुष्पताम्बूलाच्छादनादि दद्यात् । ततोऽन्यदर्घ्यं कृत्वाऽऽगतान्शुचीन्पूर्ववत्कर्षुषु पादौ प्रक्षाल्याऽऽसनेषूपवेश्य पूर्ववद्वरणं कुर्यात् । सपवित्राणि पात्राणि दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गं सादयित्वो-

दगग्रेषु दर्भेष्वेकं पात्रं ततः पश्चिमतः सादयेत् । दक्षिणाग्रे दर्भे प्रेतपात्रं पुरस्तात्सादयेत् । तानि पात्राणि गन्धोदकैः पूरयित्वा शं नो देवीरिति पश्चिमतो निहिते विश्वेदेवपात्रे तण्डुलानोप्य 'यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्' । इति पितृपात्रेष्वेकैकस्मिन्नेव तिलानावपति । 'तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्नस्वधया पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वधा नमः' । इत्यन्तं मन्त्रं पितामहादिषु यथार्थमूहेत् । सपवित्रेषु पात्रेषु प्रत्येकं पलाशपत्रपुटं निदध्यात् । विश्वेदेवकरेषु शुद्धोदकं निनीय तत्पात्रगतं कूर्चमुदगग्रं प्रदाय पत्रपुटेनार्घ्यमादाय 'या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता न आपः शंस्योनाः सुहवा भवन्तु' इत्यर्घ्यं दद्यात् । अस्त्वर्घ्यमिति प्रतिवचनम् । ततः शुद्धोदकं प्रदाय कूर्चमादाय पूर्ववत्पात्रे निदध्यात् । एवमेव पित्रादीनां नामभिरर्घ्यदानं तत्तत्पात्रेभ्योऽर्घ्यजलमादायानेनैव मन्त्रेणास्मिन्नेवावसरे गन्धपुष्पधूपदीपवासोहिरण्यादिदानं देवेभ्यः पित्रादिभ्यश्च । अनन्तरमेव कुण्डेऽग्नौ परिसमूहनादिप्रपदान्तं कृत्वा व्याहृतिभिस्तिसृभिर्हुत्वा पुनश्च व्याहृतिभिर्हुत्वा घृताक्तमन्नमुद्धृत्य प्राचीनावीती भूत्वा पित्रादीनां पुरः स्थित्वाऽग्नौ करिष्य इति पृष्ट्वा कुर्वित्यनुज्ञातः प्रत्यागत्य पश्चादुपविश्य यज्ञोपवीती भूत्वा स्वाहा सोमाय पितृमते स्वाहाऽग्नये कव्यवाहनायेत्येताभ्यामाहुती जुहुयात् । तत उपरिष्टाद्धोमादिवामदेव्यगानान्तं कृत्वा हुतशेषमन्नं तेषां भोजनपात्रेषु दद्यात् । तदनन्तरमपूपव्यञ्जनसहितमन्नं प्रदाय भोजनपात्रमालभ्य 'पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिँल्लोके' इति जपित्वा सर्वमन्नमभिमृश्येदं विष्णुरिति भोक्तुरङ्गुष्ठमन्नेऽवधाय हव्यमिति दैवे कव्यमिति पित्र्ये सकृदपः प्रदक्षिणं तूष्णीं दैवेऽपहता इत्यप्रदक्षिणं पित्र्ये परिषिञ्चेत् । बहिस्तिलैरवकीर्य ततः प्रविश्य तेषां पुरतः स्थित्वा प्रह्वीभूतो नमस्काराञ्जलिं कृत्वेदमन्नमुपतिष्ठस्व दत्तं दास्यमानं चाऽऽ तृप्तेरिदमन्नमिति ब्रूयात् । ततः प्रसन्नचेता उपविश्य व्याहृतिपूर्वां सावित्रीं तस्यां चैव गायत्रमिदं ह्यन्नौजस इति देवसंहितां जपेत् । यद्वा उ विश्पतिरित्यादिपितृवर्गं जपेत् । भुक्तवत्सु पित्रादिषु

तृप्ताः स्थेति पृष्ट्वा तृप्ताः स्म इत्यनुज्ञातो नमो वः पितर इति जपित्वा विश्वदेवानां पुरतोऽन्नं प्रकीर्य 'असोमपाश्च ये देवा यज्ञभागविवर्जिताः । तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम्' इति जपेत् । पितॄणामुच्छिष्टसमीपे 'ये त्वग्निदग्धा ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ।' इति । सकृदाचान्तेषु दक्षिणाग्रेषु पवित्रेषु त्रीन्पिण्डान्दद्यात् । प्रेतायैकम् । वक्ष्यमाणक्रमेण पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधोच्यतामित्यस्तु स्वधेति प्रत्युक्तो दक्षिणाग्रान्दर्भानास्तीर्य पितृपात्रात्किंचिदुदकमादाय यज्ञशर्मन्मम पितरवनेनिक्ष्व ये चात्र त्वाऽनु यांश्च त्वमनु तस्मै ते स्वधेति निनयेत् । ततः पितामहपात्रात्प्रपितामहपात्रात्किंचिदुदकमादायावनेनिक्ष्वेति निनयेत् । लिपश्चेद्देवाकिमेतेऽवनेनिक्ष्वेति यथार्थमूहेत् । भुक्तशेषमन्नमुद्धृत्य चतुरः पिण्डान्कृत्वैकं पिण्डमादाय क्रमेण तत्तत्स्थानेषु देवदत्तशर्मन्मम पितर्मुक्ष्व ये चात्र त्वाऽनु यांश्च त्वमनु तस्मै ते पिण्ड इति पित्र्येण तीर्थेन निदध्यात् । एवं द्वितीयं तृतीयं च पितामहप्रपितामहेति मन्त्रविकारः । ततः प्रेतपिण्डमादाय यज्ञशर्मन्प्रेत मुञ्क्ष्व ये चात्र त्वेत्यादिभिस्तेषां पुरस्तान्निर्नि(र्णि)क्तदेशे निदध्यात् । एवं निहितेषु पिण्डेष्वत्र पितरो मादयध्वमिति जपित्वा पूर्ववद्व्याहृतिपूर्वाणि सामानि जपित्वोदङ्मुखसमावर्तेत । सव्यं बाहुमुपसंहृत्य प्रसव्यमावृत्य निरुच्छ्वासो भूत्वा कल्याणं ध्यायन्नभिपर्यावर्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति । ततश्चतस्रो दर्भपिञ्जूलीरञ्जनेन निघृष्य कर्पूरं निदध्यात्यथापिण्डं तैलं सुरभि च । एतेषामङ्क्ष्वाम्यङ्क्ष्वानुलिम्पेति मन्त्रविकारः । अनन्तरं पितृपिण्डस्य पश्चिमदेशे दक्षिणं पाणिमुत्तानं कृत्वा भूमौ निधाय तस्योपरि सव्यं न्यञ्चं निधाय नमो वः पितरो जीवाय नमो वः पितरः शूषायेति जपेत् । सव्योत्तानौ मध्यमायां नमो वः पितामहा घोराय नमो वः पितामहा रसायेति दक्षिणोत्तानौ पश्चिमायां नमो वः प्रपितामह स्वधायै नमो वः प्रपितामहा मन्यव इति प्रेतपिण्डस्य पश्चादेवं कुर्यात् । ते प्रेत जीवायेति मन्त्रमूहेत् । उत्थाय कृताञ्जलिर्नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सदो पितरो देष्म इत्युपरि वासस्तन्तूनादायैतद्वः पितरो वास एतद्वः पितामहा वास एतद्वः प्रपितामहा वास एतत्ते प्रेत वास इति पिण्डेषु निधाय प्रेतपात्रमादाय पित्रादिभिरनुज्ञातो ये समानाः समनसः पितरो

यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतामित्यनेन मन्त्रेण पित्रादीनां पिण्डेषु क्रमेण योजयेत् । तत उत्थाय नमस्काराञ्जलिं कृत्वा 'समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहा सति' इत्यनेनोपस्थाय पितृपात्रमादायोर्जं वहन्तीरिति पितृपिण्डमप्रदक्षिणं परिषिञ्चेत् । पात्रं पिण्डानां दक्षिणतोऽवाङ्मुखं निधाय पितामहपात्रमादायानेनैव मन्त्रेण पितामहपिण्डं परिषिच्य तत्पात्रं दक्षिणतोऽवाङ्मुखं निदध्यात् । प्रपितामहपात्रेण प्रपितामहपिण्डं परिषिच्य तदपि पूर्ववन्निदध्यात् । आचान्तेषु गन्धपुष्पोदकाक्षतांश्च दत्त्वा यथाशक्ति दक्षिणां च दत्त्वाऽक्षय्यमस्त्विति वाचयित्वा दातारो नोऽभिवर्धन्तामिति मन्त्रं ब्रूयात् । दातारो वोऽभिवर्द्धन्तामित्यनेनाऽऽशिषः प्रतिगृह्य वाजे वाज इति सर्वान्विसृज्यानुव्रज्य पश्चाद्दैवं विसर्जयेत् । प्रविश्यागारं वामदेव्यं गायेत् । आऽस्तमयाच्चोच्छिष्टं मार्जयेत् । एवमेव मातुः सपिण्डीकरणं भर्त्रा पुत्रादिभिर्वा कुर्यात् । अथ वा मातामह्यादिभिर्वा । सपिण्डीकरणादूर्ध्वं मासि मासपरपक्षस्य पञ्चम्या ( मीमा ) रम्य मासि श्राद्धं कुर्यात् ॥ १८ ॥

अथ प्रकृतमनुसरामः—

इन्द्राण्याः स्थालीपाकस्यैकाष्टकेति जुहु-

यादेकाष्टकेति जुहुयादिति ॥ १९ ॥

इन्द्राणी त्वा जुष्टं निर्वपामीति निर्वापः । एकाष्टकेति प्रधानाहुतिः । चरुतन्त्रमेतत् । चैत्री पौर्णमासी कालश्चेत्याश्वयुजीति गौतमवचनात् ॥ १९ ॥

इति श्रीरुद्रस्कन्दकृतायां गृह्यवृत्तौ तृतीयपटले पञ्चमः खण्डः ॥ ५ ॥

तृतीयपटलश्च समाप्तः ॥ ३ ॥

---

अथ चतुर्थः पटलः ।

---

उक्तानि नित्यानि पुष्टिकामार्थानि च वक्ष्यमाणभोजननियमेन सापेक्षाणि मन्त्रक्रमानुसारेणोक्तानि । इदानीं वक्ष्यमाणभोजननियममाह—

काम्येषु षड्भक्तानि त्रीणि वा नाश्नीयादिति ॥ १ ॥

काम्यग्रहणादत्र काममतिपादनपरः कामशब्द इच्छाशब्दो वा नास्ति तत्रायं [न] नियमः । चतुर्थ्यां पञ्चम्यां चाऽऽदित्योपस्थाने भूर्भुवःस्वरोमित्यादित्यनायं वास्तोष्पत इत्येतेषु कम्बूकपण्योपतापिहोमेषु ग्रन्थीकरणे हरितगोमयप्रभृतिषु चाऽऽ परिसमाप्तेर्नियमाभावः । व्रीहियवाक्षततण्डुलांस्तिलतण्डुलान्कणान्कम्बूकान्पुरीषं हरितगोमयं च परिचरणतन्त्रेण जुहुयात् । शङ्कुशतं जुहुयात्समिततन्त्रेण । वास्तुपताधिहोमौ पक्वतन्त्रेण । शिष्टान्होमानाज्यतन्त्रेण । षड्भक्तानि त्र्यहम् ॥१॥

नित्यप्रयुक्तानामादित इति ॥ २ ॥

नियमानन्तरं नियमेन प्रयोक्तुं शक्यानामादौ भोजनम् ॥ २ ॥

उपरिष्टात्सांनिपातिक इति ॥ ३ ॥

नि(नै)मित्तिकोक्तकर्म कृत्वाऽभोजनम् ॥ ३ ॥

एवं यजनीयप्रयोग इति ॥ ४ ॥

यजनीय इति निर्दिश्य विहिते कर्मणि ॥ ४ ॥

अर्धमासव्रतीति ॥ ५ ॥

अर्धमासव्रती पौर्णमास्यां रात्रावित्यादावर्धमासमभोजनम् ॥ ५ ॥

अशक्तौ पेयमेकं कालमिति ॥ ६ ॥

अर्धमासव्रते पेयं क्षीरादि ॥ ६ ॥

अरण्ये प्रपदं जपेदासीनः प्रागग्रेष्विति ॥ ७ ॥

अत्राऽऽसननियमादन्यत्र जपे ना(नाऽऽ)सननियमः ॥ ७ ॥

एवं ब्रह्मवर्चसकामो यथोक्तं पशुकाम इति ॥ ८ ॥

गोष्ठे पशुकाम उदगग्रेषु ॥ ८ ॥

सहस्रबाहुरिति पशुस्वस्त्ययनकामो
व्रीहियवौ जुहुयादिति ॥ ९ ॥

पशूनां शोभनाविच्छेदकामो मिश्रीकृत्य त्रिः प्रक्षाल्य स्वाहेति च द्वितीया ॥ ९ ॥

येनेच्छेत्सहकारं कौतोमतेनास्य महावृ-

क्षफलानि परिजप्य दद्यादिति ॥ १० ॥

येन सख्यमिच्छेत्तस्मा उदुम्बरफलानि कौतोमतमित्यभिमन्त्र्य दद्यात् ॥ १० ॥

अर्धमासव्रती पौर्णमास्यां रात्रौ नाभिमात्रं

प्रगाह्याविदासिनि ह्रदेऽक्षततण्डुलानास्येन जुहुया-

दुदकवृक्ष इवेति पञ्चभिः पार्थिवं कर्मेति॥ ११ ॥

अविदासिन्यशोष्ये तिष्ठन्नेवाखण्डनार्थलोपान्न समित्। अग्निस्थापनमुदकम्। पृथिवीपतित्वप्राप्त्यर्थमिदं कर्म ॥ ११ ॥

प्रथमयाऽऽदित्यमुपतिष्ठेद्भोगकामोऽ-

र्थपतौ प्रेक्षमाण इति ॥ १२ ॥

वृक्ष इवेत्यादीनामेव प्रत्येकं कर्मोच्यते। कामनामेवैनेषु नार्धमासव्रतित्वम्। द्रव्यानुभवकामो द्रव्यं तमात्मानं पश्यति सति ॥ १२ ॥

द्वितीययाऽक्षततण्डुलानादित्यो(त्यः) परिविष्य-

माणे बृहत्यत्र स्वस्ती(स्त्य)यनकाम इति ॥१३॥

स्वाहेति द्वितीयाऽऽहुतिः। यात्रागमनसाधनं महता( तां ) मखादीनां शोमनाविच्छेदं च इच्छति ॥ १३ ॥

तृतीयया चन्द्रमसि तिलतण्डुलान्क्षु-

द्रपशुस्वस्त्ययनकाम इति ॥ १४ ॥

परिविष्यमाणे चन्द्रमसि मिमित्यहोमः। स्वाहेति द्वितीयाऽऽहुतिः। क्षुद्रपशवोऽजाविकादयः ॥ १४ ॥

चतुर्थ्याऽऽदित्यमुपस्थाय गुर्वर्थमभ्युत्तिष्ठेदिति ॥ १५ ॥

महार्घ्यद्रव्यं भागुप्रयोगं कुर्यात्। एवं कृते फलातिशयो भवति॥१५॥

पञ्चम्याऽऽदित्यमुपस्थाय गृहानेयादिति ॥ १६ ॥

वेश्म प्रविशेदुत्तिष्ठेत्फलातिशयो भवति ॥ १६ ॥

अन्नकाममारण्ये नित्यं जपेद्भूरितीति॥ १७ ॥

अहरहरामरणाद्यो जपेत्काममरणं स लभते। अन्नकामो न म्रियत इत्यर्थः ॥ १७ ॥

यजनीये जुहुयान्मूर्धोऽधि म इति षड्-
भिर्वामदेव्यर्ग्भिर्महाव्याहृतिभिः प्राजाप-
त्यया चालक्ष्मीनिर्णोद इति ॥ १८ ॥

निरर्थाद्दूर्ध्वमलक्ष्म्यपगमः फलम् । अक्षेमे पथ्यथेहीत्य(?)तिजपेन्मन्त्र-
लिङ्गात् । क्षेमो भवति ॥ १८ ॥

यशोऽहमित्यादित्यमुपतिष्ठेद्यशस्कामः पूर्वाह्णमध्यंदि-
नापराह्णेषु प्रातरह्नस्येति यथार्थमूहेदिति ॥ १९ ॥

मध्याह्नस्य सायमह्नस्येति ॥ १९ ॥

आदित्यनावमिति संध्योपस्थानं स्वस्त्ययनमिति ॥ २० ॥

शुभप्राप्तिसाधनमेतत्कर्म । अहरहरुपस्थानम् ॥ २० ॥

उद्यन्तं त्वेति पूर्वां प्रतितिष्ठन्तं त्वेति पश्चिमामिति ॥ २१ ॥

स्पष्टम् ॥ २१ ॥

अर्धमासव्रती तामिस्रादौ ब्राह्मणाना-
शयेद्व्रीहिकंसौदनमिति ॥ २२ ॥

अपरपक्षप्रतिपदि व्रीह्योदनं कंसेन भोजयेत् ॥ २२ ॥

तस्य कणानपरासु संध्यासु प्रत्यग्ग्रामान्निष्क्रम्य
भलायेति जुहुयाद्दक्षायेति चेति ॥ २३ ॥

उक्तव्रीहिकणान्सायंसंध्यास्वारभ्याऽऽगामितामिस्रादेर्भलाय स्वाहा
भल्लाय स्वाहेति च ॥ २३ ॥

एवमेवापरस्मिंस्तामिस्रादौ ॥ २४ ॥

व्रीहिकंसौदनं ब्राह्मणान्भोजयेत् ॥ २४ ॥

ब्रह्मचर्यमा समाप्तेराचरितशतं भवतीति ॥ २५ ॥

यावति द्रव्यसंचितवानिति व्यपदिशति तच्छतगुणितमस्य फलं
भवति ॥ २५ ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ चतुर्थपटलस्य
प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयः खण्डः ।

गौरे भूमिभागे ब्राह्मणो लोहिते क्षत्रियः कृष्णे वैश्योऽवसानं जोषयेत्समं न लोमशमनिरिणमशुष्कमिति ॥ १ ॥

वासस्थानं सेवेत श्वभ्रादिरहितं तृणबहुलमनूषरमार्द्रीभूतम् ॥ १ ॥

यत्रोदकं प्रत्यनुदीच्यां प्रवर्तेत इति ॥ २ ॥

प्रत्यगुदक्प्रवणः ॥ २ ॥

क्षीराः कण्टकिनः कटुकाश्चात्रौषधयो न स्युरिति ॥ ३ ॥

क्षीरिणः कण्टकिनः कटुकरसाश्च वृक्षा यत्र पूर्वमपि स्युस्तमपि वर्जयेत् ॥ ३ ॥

दर्भसंमितं ब्रह्मवर्चस्यमिति ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

बृहत्तृणैर्बल्यमिति ॥ ५ ॥

स्थूलतृणैर्युक्तं बलार्थम् ॥ ५ ॥

मृदुतृणैः पशव्यमिति ॥ ६ ॥

स्पष्टम् ॥ ६ ॥

स्याद्दर्भमण्डलद्वीपिभिर्वेति ॥ ७ ॥

दीर्घस्थालीभिर्युक्तं पश्वर्थम् ॥ ७ ॥

यत्र वा स्वयंकृताः श्वभ्राः सर्वतोऽभिमुखाः स्युरिति ॥ ८ ॥

प्रपलजाः कर्ध्वं ऊर्ध्वमुखोदका यत्र तदपि पशव्यम् । वासभूमिरुक्ता ॥ ८ ॥

अथ गृहमाह—

प्राग्द्वारं धन्यं पशव्यं चेति ॥ ९ ॥

स्पष्टम् ॥ ९ ॥

उदग्द्वारं पुण्यं पशव्यं चेति ॥ १० ॥

स्पष्टम् ॥ १० ॥

दक्षिणद्वारे सर्वे कामा इति ॥ ११ ॥

स्पष्टम् ॥ ११ ॥

अनुद्वारं गेहद्वारमिति ॥ १२ ॥

यस्यां दिशि बहिर्द्वारं तस्यामेवान्तर्गृहद्वारं स्यात् ॥ १२ ॥

असंलोकी स्यादिति ॥ १३ ॥

गृहमध्ये द्वारद्वयं न स्यात् । द्वारद्वयं परस्परमृजु न स्यादिति केचित् ॥ १३ ॥

अथ तद्गृहवासिनामभ्युदयसाधनं होममाह—

पायसं हविरिति ॥ १४ ॥

वास्तोष्पते त्वा जुष्टं निर्वपामीति निर्वापः ॥ १४ ॥

कृष्णा गौरिति ॥ १५ ॥

वसार्था ॥ १५ ॥

अजो वा श्वेत इति ॥ १६ ॥

स्पष्टम् ॥ १६ ॥

पायस एव वेति ॥ १७ ॥

पायस एवैको हविः स्यात् । पशोर्निवृत्तिः । अस्मिन्पक्षे वसाया निवृत्तिरेव ॥ १७ ॥

मध्ये वेश्मनो वसां पायसं चाऽऽज्येन मिश्रमष्ट-
गृहीतेन जुहुयाद्वास्तोष्पत इतीति ॥ १८ ॥

यावदन्तर्गृहायामं दर्भरज्जुचतुष्टयं कृत्वा प्रतिदिशं मध्ये प्रतिकोणं च निधायान्तर्गृहे मध्ये रज्जुसंगमदेशे रज्ज्वन्तेषु च प्रागुपक्रमं प्रदक्षिणं गोमयेनोपलिप्य शमीपलाशशमीपर्णानां पत्रैस्तण्डुलैः पुष्पैश्च गृहं सर्वतः प्रकीर्य मध्यमोपलिप्ते प्रपदान्तं कृत्वा कृतगृह्येऽग्नौ व्याहृतिभिराज्यं हुत्वा वसां पायसं चाऽऽज्येन मिश्रीकृत्य मिश्रितान्यष्टाववदानानि जुह्वा गृहीत्वोपस्तरणाभिघारणवर्जं धानावन्तं नीत्वा वास्तोष्पत इति जुहुयात् ॥ १८ ॥

याश्च परा इति ॥ १९ ॥

परा या ऋचो हये राक इत्याद्याश्चतस्रस्ताभिश्च जुहुयात् ॥ १९ ॥

सप्तालक्ष्मीनिर्णोदे ताभिश्चेति ॥ २० ॥

ताभिरिति प्रकृतापेक्षत्वाद्याः परा इत्यनुकृष्यन्ते । अलक्ष्मीनिर्णोदे याः परा वामदेव्यर्गिमर्महाव्याहृतिभिः प्राजापत्यया चेति सप्त ताभिश्च जुहुयात् । चशब्दः पूर्ववत् ॥ २० ॥

हुत्वा दिशां बलीन्नयेदिति ॥ २१ ॥

हुत्वेति स्विष्टकृत्प्रतिषेधार्थः । उक्तान्येव हवींषि हुत्वेति तत्प्रतिषेधाच्चाऽऽज्यभागौ स्तस्तेषामभावात्पुरस्ताद्याहुतिहोमाः स्युः । गानान्तं समाप्य बलिहरणम् । नात्र हविरुच्छिष्टप्राशनम् । नापि तस्य ब्रह्मणे दानं तस्य बलिहरणे विनियोगात् । उक्ता मन्त्राः सामविधौ । अथातो वास्तुशमनमित्यादिना सर्वत्र शेषत्वेन परिगृह्यते । कथमेतदवगम्यते । पायसं हविरिति वक्तव्ये बहुवचनात् । विभक्तिव्यत्ययः कृतो बहु( हु )त्वा( त्वम )नुक्तमपि विद्यत इति सूचयितुम् । अत एव दिग्ग्रहणं मध्यमस्याप्युपलक्षणम् । उपलिप्तस्थानेषु पलाशमध्यपत्राणि स्थापयित्वा तेषु बलिं निदध्यात् । प्रजापतये स्वाहेति मध्यमे । इन्द्राय स्वाहेति पूर्वे । वायवे स्वाहेति दक्षिणपूर्वे । यमाय स्वाहेति दक्षिणे । पितृभ्यः स्वाहेति प्राचीनावीती पितृतीर्थेन दक्षिणपश्चिमे । अप उपस्पृश्य वरुणाय स्वाहेति पश्चिमे । महाराजाय स्वाहेत्युत्तरपश्चिमे । सोमाय स्वाहेत्युत्तरे । महेन्द्रायेत्युत्तरपूर्वे । वासुकये स्वाहेति भूमौ यत्र कुत्रचित् । नमो ब्रह्मण इत्युपरि । एष एव बलिक्रमः । सर्वेषां वैश्वदेववदुभयतः परिषेकः ॥ २१ ॥

अवान्तरदिशां च ॥ २२ ॥

ऊर्ध्ववाचिन्यां चेति ॥ २३ ॥

स्पष्टे । एतत्पूर्वप्रोष्ठपदे नक्षत्रे कार्यम् । एवं कृते बहुपशुधनधान्यहिरण्य-, मायुष्मत्पुरुषं वीरसूसुभगाविधवास्त्रीकं शिवं पुण्यं वास्तु भवति ॥ २२ ॥ २३ ॥

एवं संवत्सरे संवत्सर इति ॥ २४ ॥

स्पष्टम् ॥ २४ ॥

नवयज्ञयोर्वेति ॥ २५ ॥

षट्सु षट्सु वा मासेषु प्रोष्ठपद एव चतुर्षु मासेषु श्रुतेर्बहुत्वकरणे फलभूयस्त्वम् ॥ २५ ॥

इदमहमिति पण्यहोमं जुहुयादिति ॥ ७ ॥

येन येन पणते तेन तेन होमः। हुत्वा व्यवहरतो द्रव्यवृद्धिर्भवति। द्रव्यानुसारं च तन्त्रं परिचरणमेतत्। स्वाहेति द्वितीयाहुतिः ॥ ७ ॥

पूर्णहोमं यजनीये जुहुयादिति ॥ ८ ॥

पूर्णहोममिति मन्त्रादिः। इतिशब्दाभावो मन्त्रलिङ्गानुसरणार्थः। अतो यशः फलम् ॥ ८ ॥

इन्द्रमवदादिति सहायकामोऽष्टरात्रोपोषितः
प्राङ्वोदङ्वा ग्रामाच्चतुष्पथे समिद्धाग्निमौ-
दुम्बर इध्मः स्यात्स्रुवचमसौ जुहुया-
दन्नं वा इति श्रीर्वा इतीति ॥ ९ ॥

स्रुवचमसौ चौदुम्बरौ। चमस आज्यधारणार्थः। अन्नं वेति। द्वाभ्यामिति सिद्धे पृथग्ग्रहणं विषयबहुत्वार्थम्। उपतापिहोमे क्षेमे पथीत्यत्र चानयोरपि निवृत्तिः सिद्धा भवति। अन्यथाऽऽनन्तर्यादन्न-स्येत्यस्यैव स्यात् ॥ ९ ॥

ग्रामे तृतीयाद(म)न्नस्येत्याधिपत्यं प्राप्नोतीति ॥ १० ॥

तृतीयामिति पूरणनिर्देशात्सर्वं जुहुयात् ॥ १० ॥

उपतापिनीषु गोष्ठे पायसं जुहुयादिति ॥ ११ ॥

व्याधितासु गोषु व्याधिनिर्हरणार्थमिदं कर्म कुर्यात्। गोष्ठे तृतीया-निर्देशात्सर्वं जुहुयात्पूर्वोक्तैस्त्रिभिर्मन्त्रैः। अतो न स्विष्टकृत्तत्रमावाज्ञा-ज्यभागौ तेषामभावाद्याहृतिहोमा न स्युः ॥ ११ ॥

अक्षेमे पथि वस्त्रदशानां ग्रन्थिं कुर्या-
त्सहायानां च स्वस्त्ययनीति ॥ १२ ॥

प्रकृतैरेव मन्त्रैः। क्षेमगमनार्थान्येतानि ॥ १२ ॥

क्षुधे स्वाहेत्येताभ्यामाहुतिसहस्रं जुहुया-
दाचितसहस्रकाम इति ॥ १३ ॥

यावति द्रव्यसंचये सति द्रव्यसंचयवानयमिति लौकिका आहुस्तत्सह-स्रगुणितमस्य फलम् ॥ १३ ॥

वत्समिथुनयोः पुरीषेण पशुकाम इति ॥ १४ ॥

स्पष्टम् ॥ १४ ॥

अविमिथुनयोः क्षुद्रपशुकाम इति ॥ १५ ॥

पुरीषेण क्षुधे स्वाहेत्येताभ्यामाहुतिसहस्रम् ॥ १५ ॥

हरितगोमयेन सायं प्रातर्जुहुयान्नास्य वृत्तिः क्षीयत इति ॥ १६ ॥

आर्द्रगोमयेण क्षुधे स्वाहेत्येताभ्यामेव होमः । जुहुयादिति प्रकृतेः पुनर्वचनमाहुतिसहस्रनिवृत्त्यर्थम् । वृत्तिक्षयाभावः फलम् । अहरहर्होमः ॥ १६ ॥

इति रुद्रस्कन्दकृतायां गृह्यवृत्तौ चतुर्थपटलस्य
तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थः खण्डः ।

---

विषवता दष्टमद्भिरभ्युक्षञ्जपेन्मा भैषीरितीति ॥ १ ॥

विषनाशः फलम् ॥ १ ॥

स्नातकः संविशन्वैणवं दण्डमुपनिदध्यात्तुरगोपायेति स्वस्त्ययनमिति ॥ २ ॥

समीपे निदध्यात् । उपद्रवरक्षाफलम् ॥ २ ॥

हत स्त इति क्रिमिमन्तं देशमद्भिरभ्युक्षञ्जपेदिति ॥ ३ ॥

क्रिमिनाशः फलम् ॥ ३ ॥

पशूनां चेदपराह्णे सीतालोष्टमाहृत्य तस्य प्रातः पांसुभिः प्रतिष्किरञ्जपेदिति ॥ ४ ॥

कृष्णमृत्तिकामाहृत्य वेहायसीं कृत्वा हत स्त इत्यादिभिर्मन्त्रैः ॥४॥

इत ऊर्ध्वं काम्यानां निवृत्तिः—

मधुपर्कं प्रतिग्रहीष्यन्निदमहमिमा-
मिति प्रतितिष्ठञ्जपेदिति ॥ ५ ॥

मधुपर्कप्रदातुः परिचारकैः प्रतिग्रहीतुः पुरस्ताद्गोमयेनोपलिप्य गोमुखं च कारयित्वा तत्र विष्टरादिषु पूजासाधनेषु समाहृतेषु तान्मधुपर्कार्थान्गां च ध्यायन्मन्त्रलिङ्गादर्हणेति जपित्वा दर्भेषु तिष्ठन्निदमहमिमामिति जपेत् ॥ ५ ॥

अर्हयत्सु वा ॥ ६ ॥

मधुपर्कदानकाले वा ॥ ६ ॥

विष्टरपाद्यार्घ्याचमनीयमधुपर्काणामे-
कैकं त्रिर्वेदयन्त इति ॥ ७ ॥

पञ्चविंशतिदर्भमयौ कूर्चौ विष्टरौ । पादप्रक्षालनार्थमुदकं पाद्यम् । पुष्पसंयुक्तमुदकमर्घ्यम् । पानार्थमुदकमाचमनीयम् । दधिमधुघृतसंयुक्तो मधुपर्कः । तेषामेकैकमादाय तस्य तस्य प्रदानकाले त्रिस्त्रिर्ब्रूयात् । प्रदाता विष्टरौ युगपत् ॥ ७ ॥

विष्टरौ पाद्यार्घ्याचमनीयमधुपर्का इति ॥ ८ ॥

बहुवचनं पूजार्थम् । दातुरभ्युदयसूचनमेव ॥ ८ ॥

गां चेति ॥ ९ ॥

गोदानकाले ॥ ९ ॥

गामानीय ॥ १० ॥

गौरिति त्रिर्ब्रूयात् । पृथक्सूत्रकरणं गोस्तत्कालहरणार्थम् ॥ १० ॥

उदञ्चं विष्टरमास्तीर्य या ओषधीरित्यध्यासीत ॥ ११ ॥

विष्टराविति त्रिरित्युक्ते तावादाय तयोरेकमुदगग्रमास्तीर्य तस्मिन्या ओषधीरिति पूर्वेणासीत ॥ ११ ॥

पादयोर्द्वितीयया द्वौ चेत् ॥ १२ ॥

वक्ष्यमाणैर्मन्त्रैः पादौ प्रक्षाल्य द्वितीयं विष्टरमुदगग्रमधस्तात्पादयोर्या ओषधीरिति द्वितीययर्चा स्तृणुयात् । चेच्छब्दात्पादयोरनित्यो विष्टरः। तदा विष्टर इति त्रिर्वचनम् ॥ १२ ॥

अपः पश्येय(द)तो देवारि(इ)ति ॥ १३ ॥

पाद्यमित्युक्ते तूष्णीमादाय मन्त्रेण पश्येत् ॥ १३ ॥

सव्यं पादमवसिञ्चेत्सव्यमिति ॥ १४ ॥

दक्षिणं दक्षिणमिति ॥ १५ ॥

स्पष्टे ॥ १४ ॥ १५ ॥

उभौ शेषेण ॥ १६ ॥

पूर्वमन्त्यमिति मन्त्रेणोभौ पादाववसिञ्चेत् ॥ १६ ॥

अन्नस्य राष्ट्रिरसीत्यर्घ्यं प्रतिगृह्णीयात् ॥ १७ ॥

अर्घमिति त्रिरुक्ते मन्त्रेण प्रतिगृह्य तूष्णीमात्मानमभ्युक्षेत् । अथ वस्त्रादीनां दानम् ॥ १७ ॥

यशोऽसीत्याचमनीयम् ॥ १८ ॥

आचमनीयमित्युक्ते यशोऽसीति प्रतिगृह्य तूष्णीं पीत्वाऽऽचामेत् ॥ १८ ॥

यशसो यशोऽसीति मधुपर्कम् ॥ १९ ॥

मधुपर्क इत्युक्ते मन्त्रेण प्रतिग्रहः ॥ १९ ॥

त्रिः पिबेद्यशसो महसः श्रिय इति ॥ २० ॥

यशसो भक्षोऽसि यशो मयि धेहि स्वाहा । महसो भक्षोऽसि महो मयि धेहि स्वाहा । श्रियो भक्षोऽसि श्रियं मयि धेहि स्वाहा । स्वाहाकारान्ताः सूत्रकारवचनात् ॥ २० ॥

तूष्णीं चतुर्थम् ॥ २१ ॥

स्पष्टम् ॥ २१ ॥

भूयोऽभिपाय ब्राह्मणायोच्छिष्टं दद्यात् ॥ २२ ॥

अन्ते सकृदाचमनम् । वाक्यशेषात्सिद्धे दद्यादिति ब्राह्मणालाभेऽद्भिः संप्रोक्ष्यान्यस्मै दानार्थम् ॥ २२ ॥

गां वेदिताऽनुमन्त्रयेत मुञ्च गामिति ॥ २३ ॥

स्पष्टम् ॥ २३ ॥

अमुष्य चेत्यर्हयितुर्नाम ब्रूयात् ॥ २४ ॥

विष्णुशर्मणो सोमयोरिति दातुर्नाम ब्रूयात् । विष्णुशर्मणे गृह्यमर्घमन्त-

मायुषे वर्धयामो घृतेनेत्यादि घृतं हुत्वा स्वायुष्यामममयामशश्वादित्यन्तं जपित्वा विष्णुशर्मणश्चोमयोरितिवद्वातुर्नाम ब्रूयात् ॥ २४ ॥

एवमयज्ञे ॥ २५ ॥

यज्ञव्यतिरिक्तेषु मधुपर्कप्रतिग्रह एवमुक्त एवंप्रकारः ॥ २५ ॥

कुरुत इति यज्ञे ॥ २६ ॥

यज्ञवेलायां तु गवि नि[वेदन]वेलायाम्(?) ॥ २६ ॥

कुरुत इति(?) ॥ २७ ॥

स्पष्टम् । यजमाननामान्यत्प्रतिब्रूयात्(?) ॥ २७ ॥

आचार्य ऋत्विक्स्नातको राजा विवाह्यः प्रिय
इति षडर्घ्याः प्रतिसंवत्सरानर्हयेत् ॥ २८ ॥

आचार्यः शिष्यस्य । ऋत्विग्यजमानस्य । स्नातक आप्लवनान्त आचार्यस्य विवाहे कन्यादानार्थम् । राजाऽभिषिक्तः सर्वेषाम् । विवाह्यः श्वशुरः कन्याप्रतिग्रहीतुः । प्रियः प्रियस्य । प्रतिसंवत्सरानर्हयेदिति संवत्सरमतीत्याऽऽगतान् ॥ २८ ॥

पुनर्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च ॥ २९ ॥

प्रागपि संवत्सरादागतानर्हयेत् । द्विरुक्तिः शास्त्रसमाप्तिद्योतिका॥२९॥
इति खादिराचार्यकृतस्य गृह्यशास्त्रस्य रुद्रस्कन्दाचार्यकृतं व्याख्यानं समाप्तम् । चतुर्थपटलस्य चतुर्थः खण्डः ॥ ४ ॥

इति रुद्रस्कन्दप्रणीता द्राह्यायणगृह्यसूत्रवृत्तिः समाप्ता ।

---

अथाग्निद्वयस्य सर्ववर्णानां पुनराधिपत्यं च भार्याद्वयसर्ववर्णविषये पूर्वाग्निं प्रणीय तयोः संयोगार्थं चतुर्थस्याह्नः सायमुपक्रम्यैकादशेऽहनि यजमानः पूर्वाग्निमवरोहणं कृत्वा तत्र स्थण्डिलं कुर्वन्नग्निं वोवृधन्तमिति तृचेन प्रतिष्ठाप्य परिस्तरणादिप्रपदान्तं कृत्वाऽनन्तरमार्याया अग्निं पात्रेणाऽऽदायेमं स्तोममिति तृचेन संयोज्य प्रत्यृचमन्ते चतुरक्षरमुपांशु जपित्वा ततोऽग्निरेत्विति षड्भिराज्यं हुत्वोपरिष्टात्तन्त्रं समाप्य प्राणायामं कृत्वा संकल्पपरिचरणेनान्तेऽग्नये स्वाहा प्रजापतये स्वाहेति हुत्वा पुनः परिषिच्य गोसूक्तमाश्वसूक्तं गीत्वा ततः समारोपयेत् ।

एकोद्दिष्टे तु संप्राप्ते विप्राभावे कथंचन ।
लौकिकाग्निं प्रतिष्ठाप्य पूजयेत्तं यथाविधि ॥ १ ॥
पायसं घृतसंमिश्रं हस्तेन ग्राससंमितम् ।
अध्वर्युर्वाग्यतः स्थित्वा प्रसव्यं दक्षिणामुखः ॥ २ ॥
प्रेतस्य गोत्रनामानि चतुर्थ्यन्तमुदीरयेत् ।
यमाय चेति मन्त्रेण हुत्वा हस्तेन पायसम् ॥ ३ ॥
यमाय सोममन्त्रेण द्वात्रिंशन्मुष्टिना चरुम् ।
एवं कृते श्राद्धहोमे प्रेतप्रीतिकरं भवेत् ॥
पिण्डं यथाविधं दत्त्वा पुण्याहं च समाचरेत् ॥ ४ ॥
नारायणस्य पुत्रेण मस्तवादनिवासिना ।
रुद्रस्कन्देन संक्षेपाद्व्याख्यातं गृह्यशासनम् ॥ १ ॥
आत्माविस्मरणायेदं स्वशिष्याणां हिताय च ।
कृतं न गर्वितेनापि प्राज्ञोऽहमिति निश्चयात् ॥ २ ॥
अनुक्तं च दुरुक्तं च शोद्धव्यं तत्र पण्डितैः ।
न लोकस्य क्षमा प्रज्ञा तत्त्वार्थपरिनिश्चये ॥ ३ ॥



| ग्रन्थनाम् । | मूल्यम् । रु० | आ० |
|---|---|---|
| ८५ ज्योतिर्निबन्धः—सूरमहात्मश्रीशिवराजविरचितः । ... .... | ३ | १५ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । .... .... .... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—जिनवडेकरोपाह्ववामनशास्त्रिभिः कृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | ११ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... .... .... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ५ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... .... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—जिनवडेकरोपाह्ववामनशास्त्रिकृतः । .... | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । .... | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । .... ... .... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... .... .... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभाष्योपेतं भागषट्कात्मकम् । | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम् । ,, ,, .... | ० | १२ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभागम् । | ८ | १ |
| १०२ ब्रह्मवैवर्तपुराणम्— भागद्वयात्मकम् । ... ... ... | ९ | ४ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—जिनवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पञ्चाक्षरमीमांसा—जिनवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... .... | १ | १ |

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकारादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्का. | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ९ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोद | २ | ० |
| १७ | आचारभूषणम् | ४ | ६ |
| १८ | आचारेन्दु. | ४ | ० |
| | आधानपद्धति | १ | १४ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठ उप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषद्. | १ | ० |
| ५ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चय | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभ | ० | ९ |
| ७ | कठोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाश | ९ | ४ |
| ८९ | काव्यप्रकाश | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| १२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७२ | गायत्रीपुरश्चरणपद्धति | १ | ८ |
| ९१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत् (शां०) | १ | ० |
| ६३ | छान्दोग्योपनिषत्(रामा०) | ३ | १२ |

| ग्रन्थाङ्का. | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |
| २० | जीवन्मुक्तिविवेक | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तर | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८९ | ज्योतिर्निबन्ध | ३ | १२ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्ति० | २ | २ |
| ७८ | त्रिस्थलीसेतु | १ | १२ |
| ९३ | दर्शपूर्णमासप्रकाश | १ | १२ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्ति | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टु रा० स० | १ | ४ |
| ९८ | धर्मतत्त्वनिर्णय | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १२ |
| ४६ | नित्याषोडशिकार्णव | ३ | ४ |
| ८८ | निरुक्तम् | ११ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पक्ष लक्ष्ममीमांसा | ० | १० |
| ५२ | परिभाषेन्दुशेखर. | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| ३ | पुरुषसूक्तम् | ० | ४ |
| ११ | पुरुषार्थचिन्तामणि | ४ | ० |
| ८ | प्रश्नोपनिषत् | १ | ० |